' त्रिचतुरस्तिसृचतसृ स्यादौ ' । २ । १ । १ ॥ स्त्रियामित्यनुवर्तते । पूर्वसूत्रादिति शेषः । तच्च श्रुतत्वात्त्रिचतुर इत्येतस्यैव विशेषणम् । परत्वादिति–ननु कृताकृतप्रसङ्गित्वेन नित्यत्वात् "आदेशादागम" इति न्यायात् पूर्वं नागम एव प्राप्नोति, नैवम्; शब्दान्तरप्राप्त्या नागमोऽप्यनित्यः । यद्वा परत्वादिति कोऽर्थः ? प्रकृष्टत्वादित्यर्थः, प्रकृष्टत्वं च "आगमात् सर्वादेश" इति न्यायात्, किञ्च "ऋतो रः स्वरेऽनि" इत्यत्राऽनीति वचनमनर्थकं स्यात् । स्वरादौ पूर्वं नकारे तिस्राद्यादेशाभावात् रत्वप्रसङ्ग एव नाऽस्तीति अनीति वचनात्पूर्वं नागमादेस्तिस्राद्यादेश इति । प्रियतिसृ कुलमिति "नोऽमिनो लुग्वा" इत्यत्र चतुःशब्दस्याऽपि लुग्विकल्पमिच्छन्त्येके, तन्मते प्रियचतसृ कुलं प्रियचतुर्वा कुलमिति । प्रियत्रीत्यादि–स्त्रीलिङ्गविवक्षायामपि समासात् ङीप्रत्यये प्रियत्र्येव, "शेषाद्वा" इति क्वचि प्रियत्रिकैवाऽऽदेशो न भवति; प्रथमं ङीप्रत्यये पश्चाद्बहुव्रीहौ "ऋन्नित्यदितः" इति कच्येव । यदा तु केवलात्त्रिशब्दाद् ङीस्तदैकदेशविकृतत्वेनाऽऽदेशो भवति । कथं तिसृकानामेति ? त्रिशब्दात् संज्ञायां के आपि बहुवचनेन स्यादेर्व्यवधानात् कथं तिसृभाव इति प्रष्टुराशयः, समाधत्ते–स्त्रीलिङ्गो बहुवचनविषयः संज्ञाशब्दोऽयमिति । तस्पन्ति परबलान्यासु "निष्कुसुरुक०" इति निपात्यते ।

' ऋतो रः स्वरेऽनि ' । २ । १ । २ ॥ अनीति नकारः प्रत्ययरूप आगमरूपो वा । समानदीर्घत्वेति–"शसोऽता०" इति, "अर्डौ च" इति, "ऋतो डुर्" इति प्राप्तानाम् । तदपवाद इति–व्यञ्जनादौ स्यादौ पूर्वयोगः सावकाशः स्वरादौ तु अयमेव स्यात् ।

' जराया जरस् वा ' । २ । १ । ३ ॥ स्त्रियां स्विति–अतिजरयेत्यत्र इति-जरशब्दात् प्रवृत्तेनाऽऽप्प्रत्ययेन जराशब्दो व्यवधीयते । जारः, जारेयः जराया अयं "तस्येदम्" इत्यण्, जराया अपत्यं "द्विस्वरादनद्याः" एयण् ।

' अपोऽद्भे ' । २ । १ । ४ ॥ स्वद्भ्याम्, शोभना अतिशयिता वा आपो ययोरिति विग्रहे "पूजास्वतेः प्राक्टात्" इति समासान्तप्रतिषेधे भ्यामि सत्यपि तदन्तग्रहणे "निर्दिश्यमानस्याऽऽदेशा भवन्ती"त्यप एवाऽऽदेशः । अब्मय इति "शीलिकामि०" इति णः ।

' आ रायो व्यञ्जने ' । २ । १ । ५ ॥ आकारस्यैकवर्णत्वात् "षष्ठ्यान्त्यस्य" इति, रैशब्दस्यैव भवति । स्मीत्येव सिद्ध इति–आमि तु रायमतिक्रान्तानि यानि तेषां "क्लीबे" इत्यनेन ह्रस्वत्वे सति "सन्निपात लक्षण" न्यायादिकाररूपं ह्रस्वमाश्रित्य समुत्पन्नो नाम् तद्विघाताय नोत्सहते । तर्हि "दीर्घो नामि" इत्यपि न प्राप्नोति ?

---

१ २-१-२ । २ १-४-६१ । ३ ७-३-१०५ । ४ ७-३-१०१ । ५ न्याय० २६ । ६ १-१-३६० । ७ ६-१-७१ । ८ ७-३-७२ । ९ ५-१-७३ । १० ७-४-१-६ । ११ २-४-१७ ।

सत्यम्, तदाऽनित्यत्वादस्य न्यायस्य भवत्येव दीर्घः, "न्याया हि स्थविरयष्टिन्यायेन प्रवर्तन्ते"। उत्तरार्थमिति-यद्येव तत्रैव क्रियतां किमत्राऽनेन सन्देहास्पदेन ? नैवम्, केचित् सन्निपातन्यायमनित्यमाश्रित्याऽतितराणामित्यत्राऽऽकारमपीच्छन्ति, तन्मतसंग्रहार्थं व्यञ्जनग्रहणमिहाऽर्थमपि तेन स्वमतेऽपि सम्मतम्।

'युष्मदस्मदोः'। २। १। ६॥ अत्राऽविवक्षितार्थयोर्युष्मदस्मदोरेतावनुकरणे इति त्यदादिकार्यमेकशेषः, "टाङ्योसि॰" इत्यनेन युष्मदस्मदादिकार्यं च यत्वादि न प्रवर्तते। अतित्वामिति-नामाधिकारात्तदन्तप्रतिपत्तौ तदन्तमुदाहरति, युष्मयतेरिति-युवां युष्मान्वेति विधेयं न तु त्वामिति, णिजि सति त्वमौ स्याताम्। अमौम्यास्विति-अयमर्थः-द्वयोरन्यत्र सावकाशत्वात् शब्दान्तरप्रवृत्त्या चाऽनित्यत्वात्परत्वात् पूर्वं त्वमाद्यादेश इति। प्रथममात्वे तु सति मन्तत्वाभावात्त्वमादयो न स्युः। णिज्वाक्यावस्थायां यद्बहुवचनं तत्क्विप्वृत्तौ गौणं बभूवेति त्वमौ भवतः। व्यञ्जन इत्येवेति-ननु व्यञ्जनग्रहणं विनाऽपि युष्मभ्यमस्मभ्यमित्यादयः प्रयोगा अनेनाऽऽत्वे कृते "लुगातोऽनापः" इत्याकारलोपे सिध्यन्ति, किं व्यञ्जनाधिकारेण ? सत्यम्, सूत्रस्य व्यक्तया प्रवर्तनादात्वे कृते लुगादिकं न प्रवर्तेत इति व्यञ्जनग्रहणम्। तथा व्यञ्जनाभावे युष्माकं युवाकमित्यादौ अनेन सूत्रेणाऽऽकार एव स्यात्, न तु "मोर्वा" इति मकारलोपः। युष्मभ्यमिति-ननु लुगस्येत्यलोपे मोर्वा कथं न ? उच्यते-स्वरस्य स्थानित्वात्। तर्हि युष्मच्छब्दाद् भ्यसोऽभ्यमादेशे लुग् न प्राप्नोति ? नैवम्, प्रत्यासत्त्या यस्मिन् प्रत्यये लुग्भवति, तस्मिन्नेव प्रत्यये पूर्वस्य यदि कार्यं भवति तदा स्थानित्वमत्र तु प्रत्ययान्तरं लुग् अतः स्थानित्वाभावः। मोर्वेति सूत्रस्याऽनन्यकार्यत्वाद्वा स्थानित्वाभावः।

'टाङ्योसि यः'। २। १। ७॥ ओश्च ओश्च ओसौ "स्यादावसंख्येयः" इत्येकशेषः, ततष्टाश्च ङिश्च ओसौ चेति कार्यं, तेन षष्ठीसप्तम्योरपि ग्रहः, अन्यथा ङिना साहचर्यात् सप्तम्या एव ओसो ग्रहणं स्यात्। अत्र ओस्ग्रहणाभावेऽपि "शेषे लुग्" इति दलोपे "मद्भुरेभोसि" इत्यनेन एत्वे, "एदैतोऽयाय्" इत्ययादेशे चाऽतियुवयोरित्यादि सिध्यति, सत्यम्; णिचि अन्त्यस्वरादिलोपे युवावादेशे "शेषे लुग्" इत्यकारलोपेऽकारस्याऽभावात्, युव्योरित्यादौ यत्वं न सिध्यतीति ओस्ग्रहणम्।

'शेषे लुक्'। २। १। ८॥ शेषग्रहणाभावे टाङ्योसीत्यधिकार आगच्छेत्। न च वाच्यं टाङ्योसीत्यधिकारो यदाऽभिप्रेतः स्यात्तदा टाङ्योसि यलुकावित्ये-

१ २-१-१०७। २ २-१-९। ३ १-१-११। ४ २-१-८। ५ १-४-४। ६ १-२-२१।

युवावौ० " इति च त्वमाद्यादेशानन्यत्र सावकाशान् बाधित्वा यूयं वयमित्यत्र सावकाशौ यूयं वयमादेशौ परत्वादुभयप्राप्तौ सत्यां तावेव भवतः । युयकमित्यादौ कुत्सिताद्यर्थे " युष्मदस्मदोऽसोभादि० " इत्यक्, एवमुत्तरत्रापि ।

' तव मम ङसा ' । २ । १ । १५ ॥ कथं तवता ममता ? सत्यम्, स्याद्यन्तप्रतिरूपकाण्यव्ययान्येतानीति शब्दान्तरत्वात् सिद्धम् ।

' अमौ म ' । २ । १ । १६ ॥ औश्च औश्च आवौ " स्यादावसंख्येयः " इत्येकशेषः, ततोऽम् च आवौ च अमौ तस्य अमौ; लुप्तषष्ठ्येकवचनान्तं पदम् । एकशेषाभावे तु अमा साहचर्याद्द्वितीयासस्कस्यैव ग्रहणं स्यात् । ननु अम् ग्रहणं किमर्थं यावता त्वामिति निष्पाद्यम् । तत्र युष्मदोऽमि निमित्ते त्वादेशे " शेषे लुक् " इति दस्य लुकि " समानादमोऽतः " इत्यमोऽस्य लुकि " युष्मदस्मदोः " इत्यन्तस्याऽऽत्वे च सिद्धं ? नैवम्, अन्तरङ्गेऽन्तस्याऽऽत्वे कार्ये बहिरङ्गोऽमोऽकारस्य लुगसिद्ध इति ।

' शसो नः ' । २ । १ । १७ ॥ ननु युष्मानित्यादौ द्वयं प्राप्नोति । " शेषे० " इत्यन्तलोपोऽनेन नकारश्च तत्र कृताकृतप्रसङ्गित्वेन नकारस्य नित्यत्वाल्लोपस्य च कृते नकारे शेषत्वाभावादप्रसङ्गित्वेनाऽनित्यत्वात् पूर्वं नकार एव भवतीति । यद्येवं किमनेन "शसोऽता०" इत्यनेनैव सिद्धत्वात्, नैवम्; अलिङ्गे युष्मदस्मदी इति पुंस्त्वाभावान्नकारो न सिध्यतीति वचनम् । बहुव्रीह्यादावभ्युपगमे वा लिङ्गस्य स्त्रीनपुंसकार्थं प्रिययुष्मान् ब्राह्मणीः, प्रिययुष्मान् कुलानीत्यादि ।

' अभ्यम् भ्यसः ' । २ । १ । १८ ॥ कार्यिणः प्रथमं निर्देशे प्राप्ते कार्यस्य प्रथममुपादानं प्रत्यासत्तिसूचनार्थम् । पाठापेक्षया चतुर्थ्येव प्रत्यासन्नेति तस्या एवाऽऽदेशः । यद्वा " ङसेश्चाद् " इत्यत्र चकारो भ्यसोऽनुकर्षणार्थः । स च पञ्चमीसाहचर्यात् पञ्चमीसम्बन्ध्येव गृह्यत इति पारिशेष्यादिह चतुर्थीभ्यसो ग्रहणमित्याह–चतुर्थीबहुवचनस्येति ।

' ङसेश्चाद् ' । २ । १ । १९ ॥ चकारेण भ्यसोऽनुकर्षणेऽपि भ्यसो ङसेश्चैकवचनान्तनिर्देशेन द्विवचनान्तनिर्दिष्टाभ्यां युष्मदस्मद्भ्यां सह वैषम्याद्यथासंख्याभाव इति ।

' आम आकम् ' । २ । १ । २० ॥ आमः कमिति कृते " युष्मदस्मदोः " इत्यात्वे कृते युष्माकमित्यादि सिध्यति किमाकारकरणेनेत्याह–आकमित्यादि ।

---

१ ७-३-३० । २ ३-१-११९ । ३ २-१-८ । ४ १-४-४६ । ५ २-१-६ । ६ १-४-४१ ।
७ २-१-३१ ।

'पदात्युविभक्त्यैकवाक्ये वस्नसौ बहुत्वे' । २ । १ । २१ ॥ पद्यते-गम्यते कर्तृकर्मविशिष्टोऽर्थोऽनेनेति पदम्, विभक्त्या सह सामानाधिकरण्यार्थम् । युनक्तीति युङ् इति, कर्तरि क्विप्, यद्वा योजनं युङ् समसंख्यं संख्यास्थानम्; युग्ममिति यत् संख्यायते तेन परिच्छिन्नं वस्त्वपि युगित्युच्यते । ततः समसंख्या द्वितीयाचतुर्थीषष्ठीरूपा विभक्तयो युग्शब्देनोच्यन्त इति । धर्मो वो रक्षत्विति-अत्र पदादेशः पदवदिति वस् इत्यस्य पदत्वे "सोरुः" रुत्वं बभूव । तथा "शसो नः" "शेषे लुग्" इत्यादीनि बाधित्वा नित्यत्वान्निरवकाशत्वाच्च वस्नसावेव भवत इति । एकवाक्य इति-एकं च तद्वाक्यं चेति "पूर्वकाल०" इत्यनेन समासे एकस्य पूर्वनिपातः ततो विशेषणस्य व्यवच्छेदकत्वात् '<u>सर्वं वाक्यं सावधारणं भवतीति</u>' न्यायाच्च एकस्मिन् वाक्य एव भवति, न तु पदे इति । अतियुष्मान् पश्यतीत्यादौ तु यथैकस्मिन् वाक्ये तथा वाक्यविभक्त्यपेक्षया एकस्मिन् पदेऽपि युष्मदस्मदी स्त इति । तथैकस्मिन्नेव वाक्य इत्यवधारणाद्यदि पदं युष्मदस्मदी चैकस्मिन्नेव वाक्ये भवतो, न तु वाक्यान्तरे; तदा सामर्थ्याभावादेवेति-परस्परव्यपेक्षालक्षणसम्बन्धाभावादेवेत्यर्थः । किमेकवाक्यग्रहणेनेति-किं सविशेषणेन वाक्यग्रहणेन वाक्यग्रहणमेव पदव्यवच्छेदाय कर्तुं युक्तं किमेकग्रहणेनेत्यर्थः । युक्तयुक्तादिति-युक्तेन युष्मदस्मत्सम्बन्धेन पित्रादिना यद्युक्तमिति स्मेत्यादि तस्मादित्यर्थः । इति स्मेत्यादि-अत्रेतिस्मेत्यादिपदं साक्षाद्युष्मदादिकं नाऽपेक्षते, किं तर्हि पित्रादिकमिति ? एकवाक्यग्रहणात् सामर्थ्याभावेऽप्येकवाक्ये पदात् परस्य युष्मदादेरादेशः सिद्धः । तथा युग्बहुत्वे इति, अप्युक्ते द्वितीयाचतुर्थीषष्ठीबहुवचनानि लब्धानि । विभक्तिग्रहणं तूत्तरार्थं इह च क्लिष्टतापरिहारार्थमिति ।

'द्वित्वे वाम्नौ' २ । १ । २२ ॥ द्वित्व इति भावप्रत्ययान्तेन संख्या निर्दिश्यते । संख्यायां च विभक्तिर्वर्तते न युष्मदस्मदी द्रव्यवृत्तित्वात् तयोरिति, द्वित्व इति विभक्तेरेव विशेषणमित्याह-द्वित्वविषयेति ।

'ङेङसा तेमे' २ । १ । २३ ॥ दृष्टपूर्वेति-पूर्वं दृष्टः "नामनाम्ना०" इति सः स्त्री चेत् ।

'असदिवामन्त्र्यं पूर्वम्' २ । १ । २५ ॥ योऽर्थः स्वेन धर्मेण प्रसिद्धो धर्मान्तरसम्बन्धं प्रत्यभिमुखीक्रियते स आमन्त्र्यः । यथा देवदत्तो देवदत्तत्वेन प्रसिद्धो धर्मान्तरेऽभिमुखीक्रियते यथा पच पठेत्यादि, तत्राऽर्थे कार्यासम्भवादुपचा-

---

१ ३-१-७२ । २ १-१-१० । ३ २-३-८ । ४ ३-१-९७ । ५ ३-१-१८ ।

रादामन्त्र्याभिधायि पदमामन्त्र्यं विज्ञायत इति । तथोत्तरत्र नित्यग्रहणादस्मिन् सूत्रे कथं विकल्पो न लभ्यत इति ? उच्यते–नित्यं विधास्यमानत्वादिति भणनात्, यत्रैव वस्नसादयो विधीयन्ते तत्रैव विकल्प उपतिष्ठते न वस्नसादीनां निषेधे इति । अथवा यद्यत्राऽपि सूत्रे विकल्पः स्यात्तदा किमेतत्सूत्रकरणेन ? यतोऽसदिवाऽऽमन्त्र्यं पूर्वमिति कृतेऽपि वस्नसादयो विकल्प्यन्ते ते च " पदाद्युग्विभक्त्यै० " इत्यनेनैव विकल्पेन भविष्यन्ति । श्रवणं यथा स्यादिति–अन्यथा लोपः स्यात्, " ते लुग्वा " इत्यनेनैव । पादादिलक्षण इति–मुनिपुङ्गवा इत्यस्य पदस्याऽसत्त्वे पादस्याऽभावादित्यर्थः । मुनिषु पुङ्गवा इति सिंहादित्वात् समासः कर्मधारयो वा, व्यवहितेऽपीति–यथा मथुरायाः पूर्वं पाटलीपुत्रमिति । पूर्वशब्दो वर्तत इति–अयमर्थो यद्यव्यवहितस्यैव पूर्वस्याऽनेनाऽसद्भावो विधीयेत न व्यवहितस्य तदा पूर्वग्रहणमपनीय असदिवाऽऽमन्त्र्यादित्येव क्रियेत यतः पूर्वस्याऽविद्यमानवद्भावे वस्नसाद्यभावः प्रयोजनं, तचेत्थमपि कृते सिध्यति । तथोत्तरसूत्रेऽप्येतदानुगुण्येन जस्विशेष्यादित्येवं विधीयेतेति ।

' जस्विशेष्यं वाऽऽमन्त्र्ये ' । २ । १ । २६ ॥ तदतद्विषयमिति–शब्दप्रधानत्वात् स्याद्वादाश्रयणेन शब्दार्थयोरैक्याद्वाऽर्थाभावे त्यदादित्वाभावात् तच्छब्दावयवयोगात् समुदायोऽपि तद् इत्यादि कृत्वा कर्मधारयकरणात् बाहुलकाद्वा नैकशेषः । तच्च अतच्च तदतदी इति द्वन्द्वे " औदेर " इति न, " नं सर्वादिः " इति निषेधात् । सामर्थ्याचद्विशेषणभूत इति–विशेष्यस्य विशेषणाकाङ्क्षित्वे एकवाक्योपात्तत्वेन सामर्थ्यात् सन्निहितत्वाद्विशेष्यत्वनिमित्तमामन्त्र्य इत्येतदेव विशेषणं विज्ञायत इति । जिनाः शरण्या–इत्यत्र शरणमिति सामान्यकर्म युष्मानिति विशेषकर्म । सिद्धाः शरण्या युष्मानथो शरणं प्रपद्ये इत्यादौ " नित्यमन्वादेशे " इति वस्नसौ प्राप्तावनेन निषिध्येते, जसिति किं साधो ? सुविहितेति–अत्र द्वयोरपि पदयोः " असदिवा० " इत्यसत्त्वे प्राप्ते " नाऽन्यत् " इत्यनेन साधो ! इत्यस्याऽसत्त्वाभावः । " नित्यमन्वादेशे " इत्यनेन च वस्नसौ । शरण्याः साधवो युष्मानिति–अत्र द्वयोरपि " असदिवा० " इत्यसद्भावः । आचार्या युष्मान् शरण्या इति–अत्राऽऽमन्त्र्यस्य विशेष्यस्य व्यवहितत्वेन परस्परोपश्लेषाभावाच्च भवति । आचार्या उपाध्याया इति–अत्र भिन्नाधिकरणयोर्न पूर्वं विशेष्यं न परं विशेषणमिति सामर्थ्याचद्विशेषणभूत इति भणनाच्च भवति ।

' नाऽन्यत् ' । २ । १ । २७ ॥ जस्विशेष्यमित्यस्य प्रधानत्वान्नाऽन्यदिति सम्बन्धेनेत्याह–जसिति ।

१ २-१-२१ । २ १-२-१०८ । ३ २-१-४१ । ४ १-४-११ । ५ २-१-२५ । ६ २-१-३१ ।

'पादाद्योः' । २ । १ । २८ ॥ मात्राश्च अक्षराणि च मात्राक्षराणि, नियत-परिमाणानि च तानि मात्राक्षराणि च तेषां पिण्डः यद्वा मात्राक्षराणां पिण्डः, नियत-परिमाणश्चाऽसौ मात्राक्षरपिण्डश्चेति । देशनाकाल इति–देशनं देशस्तं करोति " णिज्बहुलं ना० " देश्यत इति " णि वेत्यास० " इत्यनः ।

'चाऽहहवैवयोगे' । २ । १ । २९ ॥ योग इति–चादिद्योत्यसमुच्चयाद्यर्थस्य साक्षाद्युष्मदस्मदर्थसम्बन्धे इत्यर्थः । ज्ञानं च शीलं चेत्यत्र चशब्देन ज्ञानशीलयोः सद्वितीयता द्योत्यते, न तु युष्मदस्मदर्थयोरिति योगग्रहणमिति । अयमर्थः–योगग्रहणं विना अर्थात् प्रकरणाद्वा चादिषु गम्यमानेष्वपि स्यादिति ।

'दृश्यर्थैश्चिन्तायाम्' । २ । १ । ३० ॥ अत्राऽर्थे स्वरूपे वा फिः । तत्र यदाऽर्थे तदा दृशिरर्थो येषाम्, स्वरूपे तु दृशेरर्थो दर्शनमालोचनं येषां धातूनाम् । जनो वो मन्यत इति नाऽयं दृश्यो, दृश्यर्थो नाम सः यश्चक्षिमाधने विज्ञाने वर्तेतेऽतो न निषेध इति ।

'नित्यमन्वादेशे' । २ । १ । ३१ ॥ नन्वत्र निषेधाधिकारे कथमिदं विधाय-कमभूत् ? सत्यम्, नित्यं निषेधाधिकारे यन्नित्यग्रहणं तदेवं बोधयति विधानसूत्रमि-दमिति । न चेदं वाच्यमत्र नित्यग्रहणाभावे " पैदात्० " इति सूत्रे कथं विकल्प इति । तदा हि तत्रैव नवेति कुर्यादिति । कस्यचिद्व्यस्य काञ्चित्क्रियां जातिं गुणं द्रव्यं वा प्रतिपादयितुं कथितस्य तेन तदितरेण वा शब्देन पौनरुक्त्यं मा भूदिति विशेषान्तरं प्रतिपादयितुं पुनः कथनमन्वादेश इति यावत्, तेनाऽन्येन वेति–युष्मदस्मच्छब्दा-भ्यां कृत्वा विनीतत्वादिकं विधाय पुनर्युष्मदस्मद्भ्यां गुरुमाननादिकं विधीयते । अत्र सूत्रे तेनैव शब्देन कथनमस्ति, अन्येन तु कथनमुत्तरत्रैव ज्ञेयम् । पुनरन्यद्विधातुमिति-*पुनः शब्दोपादानात्तस्यैव कथनं यदि भवति तदैवाऽन्वादेशः । नत्वन्यस्य कथने* पुनः शब्दार्थो घटते, तेन यत्राऽन्यस्य कथनं तत्र नाऽन्वादेशः । ततश्च जिनदत्त-मध्यापय एतं च गुरुदत्तमित्यत्र तस्यैव जिनदत्तस्य पुनः कथनाभावादन्वादेशाभावे " त्यदामेन० " इत्यनेनैनदादेशो न भवति । यूयं विनीता इति–अन्वादेशादर्शनार्थं वाक्या-न्तरमिदमुपदर्शितम्, न तूत्तरपदसम्बन्धं बोद्धव्यम्, तेन तदित्यस्य पदस्य सपूर्वत्वा-भावादुत्तरेण न विकल्पः । तदित्यव्ययं तस्मादित्यर्थे । विनीततामात्रमत्राऽनूद्यते नाऽपूर्वं किञ्चिद्विधीयते । यूयं विनीता इति प्रथमादेशः, उत्तरस्याऽन्वादेशत्वज्ञापनार्थम् । विनीता इति विनीतत्वं प्रतिपादयितुं यूयमित्युक्तम् । तद्वो गुरवो मानयन्ति इति–

१ ३-४-४२ । २ ५-२-१११ । ३ २-१-२१ । ४ २-१-३३ ।

अन्वादेशः ।[1] यूयमिति यत्प्रथममुक्तं तस्यैव च गुरवो मानयन्तीति प्रतिपाद्य द्वितीयं कथनं तत्र त्वादेशः । एवं सर्वत्र ।

'सपूर्वात् प्रथमान्ताद्वा' । २ । १ । ३२ ॥ सहशब्दो विद्यमानवचः पूर्वशब्दो व्यवस्थार्थः । सह विद्यमानं पूर्वपदं यस्माद् "एकार्थं चा०" इति समास प्रथमान्ताद्वेति–प्रथमायाः प्रत्ययत्वात् प्रत्ययः प्रकृत्यादेरित्यादिनाऽन्तस्य लब्धत्वादन्तग्रहणं न्यायानुवादार्थमिति । धनवानसीत्यादि–अत्राऽन्येन कथनमन्वादेशः यतो धनवानसीत्यस्मिन्नन्वादेशवर्जके वाक्यान्तरे प्रथममसीत्युक्तम् । अथो प्रकम्बलस्ते स्वमित्यत्र तु ते इत्युक्तम् । गम्येऽप्यन्वादेशो भवतीति–यूयं धनवन्त इत्यादिपदोपादाने हि साक्षादन्वादेशो भवति । अथो इत्यादेस्तु द्योतकमात्रस्योपादाने गम्य एव । माणवक ! जटिलक ! ते स्वमथो इत्यादौ तु विशेषणपदस्य जटिल इत्यस्य "असदिवा०" इत्यसत्त्वं, माणवक इत्यस्य तु विशेष्यपदस्य "असदिवाऽमन्त्र्यं०" इति नाऽसद्वत्त्वं "नाऽन्यत्" इति निषेधात् ।

'त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते' । २ । १ ३३ ॥ त्यश्च त्यदश्च त्यदः । "त्यदादिः" इत्येकशेषः । "औतोऽेरः" इति तु न भवति, सूत्रत्वात् । शब्दार्थयोर्भेदविवक्षायां निरर्थकत्वेन त्यदादित्वाभावाद्वा । एताभ्यां रात्रिरधीतेति–अत्राऽविवक्षितकर्मण इङ्धातोर्योगे रात्रिलक्षणस्याऽऽधारस्य "कालाध्वभावदेशं०" इति कालस्य कर्मत्वे ततश्चाऽधीतेत्यत्र कर्मणि क्ते सति कर्मण उक्तत्वात् रात्रिशब्दात्प्रथमा । यदि वा रात्रिसहचरितमध्ययनमपि उपचारात् रात्रिशब्देनोच्यते । ततः साऽधीतेति । अर्थात्प्रकरणाद्वेति–प्रथमादेशसापेक्षत्वादन्वादेशस्य । तत्राऽसामर्थ्यात् ऋद्धस्य राज्ञः पुरुष इत्यादिवत्समासाभावः । सामर्थ्यात् समासश्चेत्पूर्वकथनसापेक्षस्याऽन्वादेशस्याऽभाव इति परस्परविरोधादुभयाभावादन्वादेशाभाव इत्याह–अर्थादित्यादि । अर्थो वा तादृशो भवति प्रकरणं वा येन ताभ्यामेवाऽपेक्ष्यस्य प्रथमादेशस्य निश्चितत्वादुभावेवाऽन्तर्भावान्निरपेक्षत्वात्समासो भवति । यथा देवदत्तस्य गुरुकुलम्, वस्तुमात्रनिर्देशं कृत्वेति–अनुवादमात्रं कृत्वेत्यर्थः । तत्राऽपि न भवति–यथा एतमातं कितमित्यत्र ।

'इदमः' २ । १ । ३४ ॥ "टौस्यनः" इति, "योर्मः०" इति च प्राप्तेऽयमपवादः । मत्पुत्रकाविति–कृत्रिमौ मत्पुत्रौ न तु पुत्राविति कः । अनुकम्प्यौ वा

१ १-१-२२ । २ १-१-२५ । ३ २-१-१७ । ४ ३-१-११० । ५ १-१-४१ । ६ २-१-२१ । ७ २-१-२७ । ८ २-१-२१ ।

मत्पुत्रो "अनुकम्पा०" इतिकः(कप्), शीलवन्ताविमकौ तिष्ठत इति। अत्राऽपि पूर्ववद्गम्यमानोऽन्वादेशः। अथो इत्यादि तु द्योतकत्वात् क्वाऽपि प्रयुज्यते क्वाऽपि न। अयं दण्डो हराऽनेनेति–अत्र सत्त्वनुवादमात्रमेव न तु निभाल्पतामित्यादि विधीयते। अथो एनं परिवर्तयेत्येव भवतीति–न तु कुण्डशब्दस्य नपुंसकस्य विशेषणत्वे एनदिति।

'अद्व्यञ्जने'। २। १। ३५॥ तकार उच्चारणार्थः, अन्यथा सौ "सोऽक" इत्यादिकृते ओ इत्यनिष्टं स्यात्। प्रथमान्ततयेह विपरिणम्यत इति–अत एव कार्यी निमित्तं कार्यमिति निर्देशक्रमे प्राप्ते निमित्तात्पूर्वं कार्यनिर्देशः। उत्तरत्राऽनगिति प्रथमान्तविशेषणोपादानाद्वा। शैक्षकाभ्यामिति–शिक्षेते इति शिक्षकौ, ततः स्वार्थे प्रज्ञाद्यण्। शिक्षणं शिक्षा "क्टेटो०" इत्यप्रत्ययः शिक्षां वित्तोऽधीयाते वा "पदक्रमशिक्षा०" इत्यकः। ततः शिक्षकावेव प्रज्ञाद्यण्। अथवा शिक्षायां मत्तौ "शिक्षादेश्चाऽण्" ततो याचादित्वात्कः। अथ सावपि व्यञ्जनत्वात्कथं नाऽयमादेश इत्याह–सौ तु परत्वादिति। साक एव विधिरिति–विश्रान्तादावन्वादेशे साको निरकश्चाऽदादेशविधानादिहैवं व्याख्या। साको यथादेशस्तदाऽन्वादेश एवेति। तेन निरकोऽन्वादेशेऽनन्वादेशे चोत्तरेणाऽदादेशः सिद्धः।

'अनक्'। २। १। ३६॥ पृथग्योगादिति–पृथग्योगारम्भादिति भावः, अन्यथा साकोऽप्यनकोऽप्यन्वादेशे पूर्वसूत्रेणैव सामान्यविधानेन सिद्धत्वात् सूत्रारम्भवैयर्थ्यमिति। अन्वादेशनिवृत्तौ तत्सम्बद्धमवृत्त्यन्त इति च निवृत्तम्। अग्र पूर्वोत्तरयोरिति, ननु परमाभ्यामित्यादौ परादिप्यदादेशात्समासे सति स्यादुत्पत्तिसापेक्षत्वेन बहिरङ्गादन्तरङ्गेऽवर्णस्यैत्वे कृते इदंरूपाभावाददादेशाभावः प्राप्नोतीत्याह–अत्रेति। किञ्च परमपदसम्बन्धिनाऽकारेण सह एत्वलक्षणः सन्धिः प्रथममेव क्रियते तदोभयोः स्थाने यः समुत्पद्यते स लभते, अन्यत्रव्यपदेशमिति न्यायाद्यदा एकारस्य इदम् शब्दसम्बन्धिता तदा एकारेण सह इदमोऽत्वं स्यात्ततः पूर्वस्य व्यञ्जनान्ततायामनिष्टरूपापत्तिः। यदा तु एत्वस्य इदं सम्बन्धिता न भवति तदैकारस्य स्थितिः स्यादित्युभयथाऽप्यनिष्टापत्तिः। एतच्चेति–कथं आग्नेन्द्रमित्यत्र प्रयोगे आकारादिन्द्रपरूपस्य स्वरस्य वृद्धिर्न भवतीत्युक्तं, ततश्च यदि पूर्वमेव सन्धिकार्यं स्यात्तदा निषेधोऽनेन व्यर्थ एवेत्यर्थः।

'अयमियं पुंस्त्रियोः सौ'। २। १। ३८॥ पूर्ववदलौकिको निर्देशः। लुप्तप्रथमाद्विवचनान्तं पदम्। पुंस्त्रियोरिति किं? पुंसि इयं स्त्रियां अयं मा भूत्। ननु कथमिदमुक्तं यावता नपुंसकेऽयमियमादेशनिवृत्त्यर्थं पुंस्त्रियोरिति वचनं स्यात् तत्राऽऽह–नपुंसके तु नित्यत्वादित्यादि।

---

१ ७-१-१४। २ ३-१-७२। ३ प्रज्ञादिभ्योऽण् ७-२-१६५। ४ ५-१-१०९। ५ ६-२-१२६। ६ ६-३-१४८।

**किमः कस्तसादौ च** [1] । २ । १ । ४० ॥ नन्वत्र तसादाविति किमर्थं यावं तावत् "ईतोऽत्वः कुतः" इति निपातनं वक्ष्यते ? सत्यम्, उत्तरार्थमिदम् । अथवा थमन्तार्थं तसादिग्रहणमन्यथाऽनवधिकं ज्ञायेत, अत्र पूर्वसूत्रात्स्यादावित्यनुवर्तमानेन तसादावित्यस्य समुच्चयार्थश्चकारः । यथा "विशेषणं विशेष्येणै०" इत्यत्र । अत एव "आद्वेर" इत्यत्र स्यादावित्यस्याऽनुवृत्तिरन्यथा चानुकृष्टत्वान्नाऽनुवर्तेत । थमवसाना इति-तेन किन्तरामित्यादौ तद्धचरेषु न भवति ।

'**आद्वेरः**' । २ । १ । ४१ ॥ द्वाविच्छति क्यनि क्विपि तयोर्लोपे सौ "आद्वेर" इत्यनेनेकारस्याऽत्वं न स्यदादिसम्बन्धिस्याद्यभावात् द्वीरित्येव भवति । एक इति-रूपनिर्णयार्थमिदं दर्शितं न तु किञ्चित्फलम् ।

'**तः सौ सः**' । २ । १ । ४२ ॥ भवतीति '<u>नामग्रहणे०</u>' इति न्यायाद्ध्राऽपि सत्त्वे भवसीति स्यात् । नपुंसके सेरभावात् पुंलिङ्गे तु सेः स्थानित्वेन सत्वे कृतेऽपि "मैदस्य" इति सलोपे विशेषाभावात् स्त्रियामुदाहृतम् ।

'**अदसो दः सेस्तु डौः**' । २ । १ । ४३ ॥ असाविति-सेरनेन डौ "डित्यन्त्यस्वरादेः" इत्येवं कार्यं, न तु "आद्वेरः" इति प्रक्रियालाघवार्थं डित्कार्यस्य सर्वकार्यबाधकत्वेन व्याख्यास्यमानत्वाच्च । हे असौ, हे असको विद्धमिति-अत्र औरित्यपि कृते तदादेशा इति सेः स्थानित्वेऽपि "अदेतः स्यमोः०" इत्यस्य न प्रसङ्गः । सिद्धाराऽमोऽपि लुपि सिद्धायां पदम् ग्रहणं तदन्यस्य स्यादेशस्य लुगतोऽमिति तत्र व्याख्यानात् । कार्याणि न भवन्तीति-एतानि च स्त्रियां प्राप्नुवन्ति । तथाहि-अदमुश्ब्दात् सौ अनेन औकारे "आद्वेरः" इत्यत्वे आपि औव्यपदेशे औतेत्यस्य सिव्यपदेशे तु आमन्त्र्ये "ऐदापः" इत्यस्य औ, अनामन्त्र्ये तु "दीर्घङ्याब्०" इत्यस्य, अकि तु "अस्यायत्तत्०" इत्यस्य प्राप्तिः । अथ औतेत्यत्र प्रथमाद्वितीयाद्विवचनेनेति व्याख्यानात्कथं सिः स्थानौकारस्य प्राप्तिः ? सत्यम्, अत्रैवं स्थिते तत्रैवं व्याख्यातमिति औतेति प्राप्नोत्येव ।

'**असुको वाऽकि**' । २ । १ । ४४ ॥ असुक इति-अत्र परत्वान्नित्यत्वाच्च "अक्यादेः" इति बाधित्वा सस्य "आद्वेरः", "डुंगस्या०", "तोदः", केचित्वसुकसिति तन्मते-सम्बोधने स्त्रियां चाऽसुक इति विसर्गान्त एव; स्वमते तु स्त्रियामसुका इति । स्त्रीसम्बोधने तु हे असुके । इति ।

---

१ ७-२-५० । २ २-१-३६ । ३ २-१-८१ । ४ २-३-११४ । ५ १-४-४२ । ६ १-४-४५ ।
७ १-४-१११ । ८ १-४-५० । ९ २-१-४१ । १० २-१-११२ । ११ २-३-४३ ।

' मोऽवर्णस्य ' । २ । १ । ४५ ॥ ननु अदः कुलमिच्छतीत्यस्मिन् वाक्येऽदस्शब्दान्नपुंसकात् सेर्लुपि " सोरुः " इति रुत्वे, " रोर्यः " इति यत्वे, " स्वरे वा " इति यलोपेऽवर्णान्तत्वान्मत्वप्रसङ्ग इति; सत्यं, पदान्तरापेक्षत्वेन यलोपस्य बहिरङ्गत्वात्तदनपेक्षत्वेन मत्वविधेरन्तरङ्गत्वादसिद्धं बहिरङ्गमिति लोपस्याऽसिद्धत्वेऽनवर्णान्तत्वान्मकाराभावः ।

' वाद्रौ ' । २ । १ । ४६ ॥ अदसोऽवयवस्याद्यागमस्य तद्ग्रहणेन ग्रहणात्तस्मिन् सत्यदस इकारान्तत्वेनाऽवर्णान्तत्वाभावादप्राप्तेऽयं योगः । अमुमुयङ्किति–समुदाये प्रवृत्ता अपि शब्दा अवयवेऽपि वर्तन्ते इति । मात्रा शब्दोऽर्धमात्रायामपि तेनाऽमुमुयङ्ङित्यत्राऽर्धमात्रिकस्याऽपि रः स्थाने एकमात्रिक उकारादेशो भवति । अत्र वा व्यवस्थितविभाषार्थो न विकल्पार्थस्तेन क्वाऽपि कथञ्चिद्विकल्पः प्रवर्तते यदि तु विकल्पार्थः स्यात्तदा प्रथममेव प्रयोगद्वयं स्यात् । तावतैव विकल्पस्य चरितार्थत्वात् । अदसो दकारस्येति–अद्रेरागमत्वाददस्ग्रहणेन ग्रहणाददसो दकारस्येत्युक्तेऽपि अदसोऽद्रेश्च दस्य मः सिद्धः, दकारस्येत्यत्र एकवचनान्तत्वादेकस्यैव दस्य म इति तु न वाच्यम् जात्याश्रयणात्; चातुरूप्यमिति स्वार्थे भेषजादित्वात् ट्यणे चतुर्णां रूपाणां भावः " पतिराजान्त० " इत्यनेन वा ।

' मादुवर्णोऽनु ' । २ । १ । ४७ ॥ अनु पश्चादिति, अत्राऽनुना पूर्वं सम्बन्धस्तस्य च पश्चादर्थत्वात् " प्रभृत्यन्यार्थ० " इति दिग्योगलक्षणा पञ्चमी । यदि पूर्वं पश्चादित्यनेन योगो विवक्ष्यते, तदा " रिरिष्टात्० " इत्यनेन कार्यान्तरेभ्य इत्यत्र षष्ठी स्यात्; पश्चादित्यखण्डमव्ययं वा । अथाऽत्रानुग्रहणं किमर्थं यतो यदि कार्यान्तरात् प्रागुत्वर्णो भवति तदा इनादेवेत्युत्तरसूत्रे नियमार्थे व्याख्यायमानेऽनर्थस्य लब्धत्वात्, सत्यं, एवमपि नियमाशङ्का स्यात्, इनादेशस्तावत्प्रत्ययादेशस्ततोऽन्यस्मादपि प्रत्ययादेशादेव पश्चादुवर्णः; प्रकृत्यादेशात् परत्वात् पूर्वमपि भवेत्तथा च अमुया अमुयोरित्यादयो न सिध्येयुः । अमुष्मै–नन्वत्र " ङित्यदिति " इत्योत्वं स्मै आदेशे कृते कथं न भवति ?, उच्यते–अदितीत्यत्र नञः पर्युदासाश्रयणात्, स हि सदृशग्राही ततो यत्र साक्षात् स्वरोऽग्रे भवति तत्रैव पूर्वस्योकारस्य ओकारस्तत्राऽदितीति साक्षात्स्वरवर्जनात् ।

' बहुष्वेरी ' । २ । १ । ४९ ॥ अमुकेभ्यः अत्राऽकस्तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणेऽप्युकारेण व्यवधानादनेन ईत्वाभावः ।

---

१ १-३-२६ । २ १-२-२४ । ३ ७-१-६० । ४ २-२-७५ । ५ २-२-८२ । ६ १-४-२३ ।

'धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये' । २ । १ । ५० ॥ युवर्णस्येति कर्तव्ये यदिवर्णोवर्णस्येति कृतं तद्विचित्रा सूत्रकृतिरिति दर्शनार्थम् । प्रत्यये इति 'प्रत्ययाप्रत्यययोरिति' न्यायेन प्रत्यय एव भविष्यति किं तद्ग्रहणेन ? सत्यं, 'न्यायानां स्थविरयष्टिन्यायेन प्रवृत्तिः' । नियौ, निय इति, ननु गौणमुख्ययोरिति मुख्यस्यैवेयुवौ प्राप्नुतः ? नैवम्, "स्यादौ वः" इति सूत्रस्यैतदपवादत्वाद् गौणस्याऽपि भवति । स्त्रियाविति–ननु "स्त्रियाः" इत्यनेनाऽपीय् सिद्धः किमत्रोदाहरणेन ? सत्यं, तेन नाम्न इय् भवति अनेन तु धातोः, अत एव यत्र क्विबन्तः स्त्रीशब्दो भवति तत्राऽनेन "वाऽम्शसि:" इति विकल्पो बाध्यते ।

'इणः' । २ । १ । ५१ ॥ अत्र व्यभिचाराभावेऽपि धातोरित्युत्तरार्थमनुवर्तनीयम् । यत्वापवाद इति–"योऽनेकस्वरस्य" इति प्राप्तस्य । परत्वेनेति–शितीति विशेषविहितत्वात् प्रकृष्टत्वेनेत्यर्थः । परत्वं तु स्पर्धाभावान्न घटते । परत्वादिति–'पूर्वेऽपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरानिति', "योऽनेकस्वरस्ये" ति प्राप्तं यत्वं बाधते न तु गुणवृद्धी । ईयतुरित्यत्र द्वित्वे कृते 'वार्णात्प्राकृतं बलीय' इति न्यायात्प्रथममियादेशस्ततो दीर्घः ।

'संयोगात्' । २ । १ । ५२ ॥ य्वोरपवादौ इति "क्विवृत्तेः०" "योऽनेकस्वरस्य" इति विहितयोः ।

'भ्रूश्नोः' । २ । १ । ५३ ॥ संयोगात् परस्येति विशेषणं श्नोर्न तु भ्रूशब्दस्याऽव्यभिचारात् ।

'स्त्रियाः' । २ । १ । ५४ ॥ स्त्रियामित्यत्र 'निरनुबन्धग्रहणे' इति न्यायात् "इस्वापश्च" इति नाम् न परमस्त्रियाविति–ग्रहणवतेति नोपतिष्ठते, "वेयुवो०" इत्यत्राऽस्त्रिया निर्देशात् । यद्वा स्यादिप्रत्ययेन प्रकृतेराक्षेपात् स्त्रिया इति तस्या विशेषणत्वेन तदन्तसंप्रत्ययात्तदन्तस्याऽप्युदाहरणं । तर्हि शस्त्रीशब्दस्याऽपि तदन्तत्वादियादेशः प्राप्नोतीत्यादाऽनर्थकत्वादिति । एतच्चेति–अस्त्रिया इति निर्देशात् परादपीयुव्यत्वादिकार्यात् प्रथममेव ईदाश्रितं कार्यं भवतीत्याद्युक्तं तत्रेत्यर्थः ।

'वाऽम्शसि' । २ । १ । ५५ ॥ अत्र षष्ठीबहुवचनस्य नामविषयत्वेन स्वरादित्वाभावात् शस्साहचर्याच्च तुल्यायामपि संहितायां द्वितीयैकवचनस्यैव ग्रहणम् । स्त्रीशब्दस्य संख्यैकार्थत्वाभावाच्चद्वितस्रसोऽनुत्पत्तेः संख्यैकार्थत्वयोगादुत्पत्तौ न्या

१ १-१-५० । २ १-३-५६ । ३ १-१-५८ । ४ १-४-३१ । ५ १-४-३० ।

स्यादित्यामादिनीयायुत्पन्नस्यैव अयो ग्रहणात्स्याऽन्यनिपातनेन गाहणर्थम् स्यमापन्नस्येति, अथ धातुरूपस्यैव श्रीशब्दस्य विकल्पार्थमिदं कस्मान्न भवति, कस्मादुक्तं "धातोरिवर्णो०" इत्यादिना नित्यमियादेश इति ? उच्यते–श्रिया इति समासस्थासमलोरेव श्रीशब्दस्य ग्रहणम् । स एव चाऽनुवर्तते न चाऽनुवर्तमानस्या-न्यपायं भवति, यदाह श्रीशेषराजः "नहि गोधा सर्पन्ती सर्पणादहिर्भवतीति" तस्मादुक्तमुक्तं "धातोरिवर्णो०" इत्यादिना इयादेश इति ।

'योऽनेकस्वरस्य' । २ । १ । ५६ ॥ धातोरित्यनुवर्तत इति, 'विशेषातिदिष्टः प्रकृतं न बाधते' इति न्यायात्, इयुबाधकमिदम् ।

'स्यादौ वः' । २ । १ । ५७ ॥ उवाबाधनार्थमिदं, वसुमिच्छतीति देवमपि राजानं चेत्यर्थः । द्रव्यवृत्तिस्तु नपुंसकः ।

'क्विब्वृत्तेरसुधियस्तौ' । २ । १ । ५८ ॥ क्विबन्तेनैवेति, नन्वत्राऽवधारणं कस्माल्लब्धम् ? उच्यते–वृत्तिरूपस्य धातोः स्यादौ कार्यविधानात्तस्य च केवलस्य प्रयोगाभावादुधियग्रहणादेव क्विपि लब्धे क्विब्ग्रहणमवधारणार्थमत एवाऽन्यथाऽनन्य शब्दाश्रयत्वादसामर्थ्यमपि नाऽस्तीत्याह क्विब्वृत्तेरिति । सेनानीरिति–सेनां नेतेत्यर्थ-कथनं यावता सेना शब्दस्य षष्ठ्यन्तस्य 'गतिकारकेति' न्यायेन नीशब्देन क्विबन्तेन "ङस्युक्तं" इति समासः, न च वाच्यं "नै मात्स्येक०" इति नियमेन द्वितीयैव प्राप्नोति न षष्ठी तत्कथं कृतीति समासः ? उच्यते–"कर्तुर्ष्यण् कारकः" इत्यस्यैव विषयेऽयं नियमो न कृतीत्यस्य, यद्वाऽपि नयतीति नीः पश्चात् सेनाशब्देन कर्मणव्यन्तेन कारक-त्वात् स्याद्युत्पत्तेः पूर्वं क्विबन्तेन समासस्तदाऽपि यत्वं भवतीत्याह यद्वेत्यादि, उभयत्रा-ऽप्यर्थभेदाभावात् प्रक्रियाभेदमात्रमेतदुपदर्शितमिति, परमार्थतस्तु तोत्तरदादेव क्विप् । ननु बहवः सेनान्यो यस्येति कृते यत्वं भवति वा नवा ? भवत्येव, यतः सेनानीशब्द-स्य क्विबन्तेन वृत्तिरस्ति । परमनीरिति–परमशब्दस्याऽकारकत्वात् क्विबन्तेन समासा-भावात् क्विब्ग्रहणादिह यत्वं न भवति ।

'दृन्पुनर्वर्षाकारैर्भुवः' । २ । १ । ५९ ॥ दृन् हिमस्ति दृ, दृह इति धातुः दृहतीति क्विपि, हलोपे, निलोपे च "यत्नेन" इति हलोपे दृन् इति रूपम् । वर्षा-भूरिति–मेघयां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे नपन ( नरर्षण् ) इति वैजयन्तीकारः । कारेति–क्विपत इति कारो राजलभ्यो मागः । कस्मै उभयं शाकटायनः । यदि कर्मणं

1 ३-१-५० । २ १-३-४४ । ३ १-२-५ । ४ ३-१-४६ । ५ ३-१-८६ ।

पठित्वा करकारशब्दयोरेकार्थत्वादेकदेशविकृतं तदेवेति कारशब्देनाऽपीच्छति । स्वयम्भुवाविति–अत्राऽपि " दिद्युद्दद्‌द्‌ज्ज० " इत्यादिना क्विप् । न तु " शंसस्वयंम्० " इत्यादि डुः । तदा हि धातुत्वं न स्यात् । एतैरेवेति–प्रकृतिनियमोऽयम् । एतैर्योगे भुव एव नाऽन्यस्य, धातोरिति तु उपपदानियमो न भवति । " अर्भ्वयम्भुवोऽव् " इति सूत्रनिर्देशात् । एवंविधे हि नियमे क्रियमाणे एतैर्भुव एव नाऽन्यस्येत्यन्ये धातवो नियन्त्रिताः स्युः । भुवस्तु एतैरन्यैश्च योगे वत्वं स्यात्तथा चाऽस्वयम्भुव इति न स्यात् ।

' णषमसत् परे स्यादिविधौ च ' । २ । १ । ६० ॥ णो विधीयमानत्वे नैष्वस्तीत्यप्राधकारे णशब्देन णत्वविधायकानि सूत्राण्युच्यन्ते, एवं षशब्देनाऽपि षत्वविधायकानीति । एतत्सूत्रनिर्दिष्टयोरिति–यदि तु सप्तमपादोक्तक्रमेण षण इति क्रियते तदा णत्वमसत् द्रष्टव्यमिति पूर्वं कृतस्य णत्वस्यासत्त्वात् प्रनष्ट इति सिद्धम् । न च श इति व्याप्त्या पूर्वमेव न भविष्यति । धातोः पश्चादुपसर्गसम्बन्ध इति मते व्याप्त्यपेक्षरितार्थत्वात् अभिषुणोतीत्यादि न सिध्यति । " उपसर्गात्सुग्० " इत्यनेन विहितस्य षत्वस्य णत्वे परेऽसत्त्वात् । " रषृवर्णान्नोण० " इत्यनेन षकाराद्विधीयमानं णत्वं न स्यात् । णषशास्त्रं वेति–अयमभिप्रायः, शास्त्रस्यैवाऽसिद्धत्वं युक्तम् । कार्यासिद्धत्वाश्रयणे हि यथा देवदत्तस्य हन्तरि हतेऽपि न पुनर्देवदत्तस्य प्रादुर्भावो भवति तथा कार्येऽसिद्धत्वमापादितेऽपि न प्रकृतेः पुनः प्रत्यापत्तिर्भवति । ततः पुष्ण इत्यत्र णत्वस्याऽसिद्धत्वेऽपि नकारप्रत्यापत्तेरभावाभ्राऽनन्त्वा प्रकृतिरिति तन्निबन्धनोऽनोऽकारलोपो न स्यात् । शास्त्रासिद्धत्वे त्वकारलोपशास्त्रमेव तावत्प्रवर्तते न णत्वशास्त्रमिति । अधिकार इति–अपि उपरि क्रियतेऽनुवर्त्यैव इत्यधिकारः पाभि ।

' क्तादेशोऽपि ' । २ । १ । ६१ ॥ ककारेणोपलक्षितस्य इति व्युत्पत्तिकरणात् क्तक्तवतुक्तिक्त्वानां ग्रहणं सिद्धं, ककारोपलक्षितस्य तकारस्य सर्वेष्वेषु विद्यमानत्वात् । परे कार्ये इति–परत्वमेतत्सूत्रापेक्षं विज्ञायते, न क्तादेशविधायकसूत्रापेक्षम्, अपीति प्रतिषेधात् । एतत्सूत्रापेक्षे हि परत्वे " र्यञ्जपञ० " इति पत्वमपि परम् । तदिमत्पत्वे प्राप्तेऽपीति प्रतिषेधो युज्यते । क्षामिमानिति–क्षामस्याऽपत्यं " अत इञ् " ततो मतुः । यद्वा क्षामोऽस्याऽस्ति इन् ततः क्षाम्यत्राऽस्ति मतुः । स्त्र्युः प्त्युरिति, सूनं पूनं चेच्छति क्यन् " क्यनि " इति ईकारस्ततो क्वप् । यदाऽपि लवनं सूनिमिच्छति या स्त्री क्यन् स्त्नीयतीत्यादि प्रक्रिया क्रियते तदाऽपि प्रामण्यादिशब्दवत् विशेषणशब्दत्वेन नित्यस्त्रीत्वाभावात् " योऽनेकस्वरस्य " इति यत्वे स्त्र्युः प्त्युरित्येव

१ ५-२-८१ । २ ५-२-८४ । ३ ७-४-७० । ४ २-१-३१ । ५ २-१-६१ । ६ १-१-८० ।
७ ६-१-११ । ८ १-४-२६ ।

भवति। यदा तु लूनिमिच्छति यः पुमानित्यादि क्रियते, तदा यो लूनिशब्दः स्त्रीलिङ्गः स ईदन्तो न भवति, यस्तु क्यबन्तः स नेदन्तः स न स्त्रीलिङ्ग इति "[1]स्त्रीदुतः" इत्यस्य प्राप्तिरेव नाऽस्ति, यत्वे लून्युः लून्युरित्येव। यदा तु क्यन्तादेव डस् तदा "[2]स्त्रियां ङितां वा०" इति दासि तत्पक्षे तु "[3]ङिर्त्यदिति" इत्येत्वे लून्या लूनेरिति रूपद्वयं पश्चाद्भागे ज्ञातव्यम्। नन्वपीति किमर्थं यतः षत्वरूपे परे कार्ये कर्तव्ये क्वादेशस्याऽसत्त्वं प्राप्तमनेन निषिध्यते, तच्च परे कार्ये इति भणनान्न प्राप्नोति, णत्वषत्वयोः पूर्वसूत्रे ग्रहणादिति? सत्यं, अत एव प्रतिषेधात् पूर्वत्र णत्वसहचारितं सप्तमपादनिर्दिष्टं षत्वं गृह्यते तेन अद्राक्षीदित्यादि सिद्धम्, अन्यथा यदि पूर्वसूत्रे सामान्येन षत्वमङ्गीक्रियते तदा "[4]षढोः कस्सि" इति परे कार्ये कर्तव्ये षत्वस्याऽसत्त्वात् कत्वं न स्यादिति। मग्न इति–"[5]मस्जेः सः" इति सस्य नः। "[6]नो व्यञ्जन०" इति लुप्।

'षढोः कस्सि'। २। १। ६२॥ लिघोक्ष्यति स्यतिप्रत्यये गुणे "[7]हो धुट्पदान्ते" इति ढत्वे नित्यस्याऽपि कादेशस्य परेऽसत्त्वात् "[8]गडदबादेः" इत्यादेश्चतुर्थत्वे सतोऽनेन कत्वे सिद्धम्। कश्चिच्छासेरपि सौ विकल्पेन ककारमिच्छति तन्मते–शाक्षि, शास्सि।

'भ्वादेर्नामिनो दीर्घोर्वोर्व्यञ्जने'। २। १। ६३॥ "[9]रदादमूर्छ०" इति सूत्रे मूर्छ इति निर्देशात् प्रत्ययाप्रत्यययोरिति नाऽऽश्रीयते। भ्वादेरिति आवृत्त्या नामिन इत्यनेन वोरित्यनेन च सम्बध्यते। हूर्च्छेति–अत्राऽथ्, मूर्च्छेति–अत्र भिदाद्यङ्, चुचूर्षति–"[10]ईर्व्य०" इति षेट्, दीव्यात् अत्राऽऽशीःक्यात्; सप्तम्यां तु दीव्येत् सीव्येत्। असद्विधाविति–अथाऽत्र दीर्घद्वारेणैव स्थानिवद्भावप्रतिषेधो भविष्यति, किमनेन सूत्रेणाऽसदधिकारविहितेन? नैवं, ओर्मा मोर्मा इत्यत्र सार्थकत्वात्। तथाहि ऊर्वतीति मूर्च्छतीति मनि "[11]राल्लुक्" इति वकारछकारयोर्लोपे एतत्सूत्रविहितदीर्घस्याऽसद्विधित्वेनासत्त्वे "[12]लघोरुपान्त्यस्य" इति गुणो भवति, अन्यथा लघ्वभावात् स न स्यात्। दिव्ना दिव्ने इति, यलवानां सानुनासिकनिरनुनासिकत्वेऽप्यत्र निरनुनासिकत्वं विवक्षितमिति "[13]अनुनासिके च०" इत्यूट् न भवति। "[14]मन्वन्क्वनिप्" इति क्वनिब्विधायके सूत्रे कचिद्ग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्कचिदयं

---

१ २-१-५६। २ १-४-२८। ३ १-४-२३। ४ २-१-६२। ५ ४-४-११०। ६ ४-२-४५। ७ २-१-८२। ८ २-१-७७। ९ ४-२-६९। १० ४-४-४७। ११ ४-१-११०। १२ ४-३-४। १३ ४-१-१०८। १४ ५-१-१४७।

स्वरूपेण न भवति । क्वचित् धातुबन्धो न भवतीति नागमाभावः । प्रत्यासत्त्येति–अत्रैकेन प्रयत्नेन द्वयोरुपादानं प्रत्यासत्तिः । शब्दान्तरं प्रतीत्य शब्दान्तरस्याऽऽसत्तिरिति व्युत्पत्तेः । इयमेव हि शब्दस्य शब्दान्तरेण प्रत्यासत्तिः । यदेकप्रयत्नेनोच्चारणं नामैकवाक्योपात्तलक्षणप्रत्यासत्तिर्नेहोपयुज्यते ।

'पदान्ते' । २ । १ । ६४ ॥ पिपठीरिति, ननु स्वादेः सम्बन्धिनो नामिनो दीर्घ इत्युक्तं, तत्कथमत्र पिपठिष् इत्यस्यास्वादिरूपस्य सम्बन्धिनो नामिनो दीर्घ इति ? सत्यम्, स्वाद्यवयवेन पद् इत्यनेन योगात्समुदायोऽपि पिपठिष इत्येवंरूपो स्वादिः । यद्येवं पूर्वसूत्रेषूदाहृतेषु चतुर्भिः, चतुर्थ इत्यादिष्वप्यनेन प्रकारेण स्वादिसम्बन्धित्वमस्त्येव तत्कथं न दीर्घः सत्यम्, धातुत्वे सति स्वाद्यस्वादिचिन्ता क्रियते, अत्र तु धातुत्वस्याऽप्यभावः । तर्हि कुर्कुरीयति, चतुर्यति, दिव्यतीत्यादिषु धातुत्वमस्ति ततोऽनेन प्रकारेण स्वादित्वमप्यस्ति ततो दीर्घः स्यात्; सत्यं, यद्यप्येवं प्रत्ययान्तानां धातुत्वमस्ति पिपठीरित्यादिवदेतेषु न स्वाद्यवयवात् प्रत्ययो विधीयते, किं तर्हि नाम्न एव ? ततो स्वाद्यवयवयोगाभावात् कुर्कुरीय इत्यादेः समुदायस्य न स्वादित्वम् । आशीरिति अत्र नित्यमपि विसर्गं बाधित्वा "नित्यादन्तरङ्ग"मिति न्यायात् प्रथममनेन दीर्घस्ततो विसर्गः ।

'न यि तद्धिते' । २ । १ । ६५ ॥ नाम्युपान्त्य इति, अयमर्थः । यदा दिवु इत्यादेः क्विप् तदा ऊटा भाव्यं, इति न वकारान्तत्वम्; यदा तु विच् तदा गुणे कृते एकारस्य दीर्घरूपस्य दीर्घकरणं व्यर्थम् । ननु दिव्यमित्यत्र सम्भवति वान्तो नाम्युपान्त्यश्च धातुः, सत्यं, अत्राऽपि डिव्प्रत्ययान्तस्यौणादिकत्वाद्दिवो न धातुत्वमिति न वान्तो नाम्युपान्त्यश्च धातुः सम्भवति । धुर्यामिति–धुरशब्दाज्ञातित्वाद् ङ्यां, 'धुर्व्' पालनपूरणयोरित्यस्मात् "कैपृधृ०" क्विति प्रत्यये वा । एवं गिर्योः किर्योरिति । बहिरङ्गलक्षणस्येति–प्रत्ययाश्रितत्वेन यत्वं बहिरङ्गं, दीर्घत्वं तु प्रकृतिमात्राश्रितत्वेनाऽन्तरङ्गम् । कुरु–कुर्वित्युकारः किमिति, अन्यथा प्रतिपदोक्तत्वात् कुरव् शब्दे इत्यस्यैव ग्रहणं स्यात्तर्हि कुच्छुर इति निर्विवादं क्रियताम् । न च वाच्यं कुच्छुर इति कृते 'कुंगट्' हिंसायामित्यस्याऽपि ग्रहणं स्यात्, कृणोतीत्यादौ रेफाभावात् करिष्यन्तीत्यादौ तु नाम्यभावेन दीर्घत्वप्राप्तेरभावाच्चेति । उच्यते–एवंविधे सूत्रे कृते चिकीर्षतीत्यादौ दीर्घनिषेधः स्यात् । संविव्याय, विव्याधेति 'व्येंग्', व्यधंच् आभ्यां णवि, "न्वेस्यवृणवि" इत्यात्वप्रतिषेधे द्वित्वेऽनादिव्यञ्जनलोपे

---

१ उणा० १८८ । २ ४-३-१ ।

" ह्रस्वः " इत्यनेन ह्रस्वत्वे, तस्य च कार्यान्तरबाधनार्थं " ञ्यान्त्येऽधि " इति इकारस्याऽपीत्वे प्रथमे प्रयोगे "नामिनोऽकलिहलेः" इति एत ऐत्वे आपि न सिद्धम्। असिद्धत्वादिति–द्वित्वे कृते प्रत्ययाश्रितत्वेन बहिरङ्गस्य प्रकृत्याश्रितत्वेनाऽन्तरङ्गे दीर्घत्वे कर्तव्ये " ह्रस्वः " इत्यनेन कृतस्य इकारस्येत्यर्थः । न तु व्यवस्थापनार्थं, " ञ्योऽन्त्येऽधि० " इति कृतस्येकारस्याऽपि मध्ये इकारस्याऽसिद्धत्वं यतस्तस्याऽसिद्धत्वे " ह्रस्वः " इत्यनेन कृत इकारः सिद्धः स्यात्तस्य च नामित्वात्ततो नामिनोऽसिद्धत्वादिति यदुक्तं तद् व्याहतं स्यात् । ननु नामिनोऽसिद्धत्वादिति किमित्युक्तं यावता यद्यप्यत्राऽनेन दीर्घो भविष्यति, तथापि " ह्रस्वः " इत्यनेन ह्रस्वे कृते संविव्यायेत्यादि सेत्स्यति; सत्यम्, ह्रस्वरूपे परस्मिन्कार्ये विधेये दीर्घत्वं दीर्घत्वशास्त्रं वाऽसिद्धं भवतीति । यदाऽपि नित्यत्वाद्विशेषविधानाद्वा " ह्रस्वः " इति बाधित्वा " ञ्योऽन्त्येऽधि० " इति प्रवर्तते तदाऽपि तस्याऽपि प्रत्ययाश्रितत्वेन बहिरङ्गत्वेनाऽसिद्धत्वान्नामिनोऽभावाद्दीर्घाभावः । कुर्दते, कुर्दनेत्यादिषु द्रोस्फूर्जेति ज्ञापकाद्दीर्घत्वं न भवति, कथं यदि रेफोपान्त्यानां दीर्घः स्यात्तदा द्रोः स्फूर्जा वज्रनिर्घोष इत्यस्याऽपि दीर्घः सिद्ध इति दीर्घोच्चारणं न कर्तव्यम् । तस्मादत्र दीर्घं कुर्वन् ज्ञापयति भ्वादेरित्ययं विधिरनित्यः ।

' मो नो म्वोश्च ' । २ । १ । ६७ ॥ पदान्त इत्यनुवर्तमानेन समुच्चयार्थश्चकारो न तु पदान्त इत्यस्याऽनुकर्षणार्थः । विधानसामर्थ्याल्लोपाभावो नाऽऽशङ्कनीय इत्याह–न त्वस्याऽसत्त्वादिति । खल्वपीति–अप्यर्थेऽखण्डमव्ययम् ।

' स्रंस्ध्वंस्क्वस्सनडुहो दः ' । २ । १ । ६८ ॥ उखास्रदिति, उखया पुनेन साऽरूपा वा स्रंसते । ननु दकारकरणं किमर्थं ? तकार एव क्रियताम्, यतस्तकारेऽपि कृते "धुटस्तृतीयः" इत्यनेन दकारो भविष्यति । नैवम्, तकारे विधीयमाने परेऽस्मादिति वचनात् " धुटस्तृतीयः " इति दत्वाभावाद्दकारश्रवणं न स्यात् । स्वनडुदिति–अत्र बहुत्वे वाक्यं कार्यमेकत्वे तु " पुंमनडुन्नौ० " इति कच् स्यात् । कस्मिस्तीति–क्रमोः ककारो 'वसं' निवासे, 'वसिक्' आच्छादने अनयोर्धुटामार्थः । तेन वसेः क्विपि यजादित्वात् य्वृति दीर्घत्वे ऊः । क्षौमं वस्ते क्विपि क्षौमवः । अथ वसतिवस्त्योः सकारान्तत्वाव्यभिचाराद्व्यभिचारे च विशेषणस्याऽर्थवत्त्वाद् व्यभिचारिणः कस एव ग्रहणं भविष्यति । कुतो कस्सिति सकारोपादानात् ? नैवम्, अन्यथाऽपि प्रतीतिः स्यात्, यङ्लुबन्तयोरेतयोरेव ह्यस्तनीसिबन्तयोर्विशेषनिहितत्वेन "सेः स्द्धां च० " सिन् लोपा-

१ ४-१-३६ । २ ४-१-७१ । ३ ४-१-५१ । ४ २-१-७६ । ५ ७-३-१०२ । ६ ४-१-७५

भावे क्विरिति द्विः राकाररूपाद्ग्रहणं स्यादितीह मा भूदिति ककारकरणम् । रुत्वढ योरेव बाधकमिति–अनडुह्शब्दे " हो ढः " इत्यनेन ढत्वस्य शेषेषु रुत्वप्राप्तिः । प्राप्ते चाऽप्राप्ते चेति क्लीबे विद्वत्कुलमित्यादिष्वप्राप्ते पुंस्त्वे तु विद्वानित्याः प्राप्ते इति तस्य न बाधकम् ।

' ऋत्विग्दिशृग्दृश्स्पृश्स्रज्दधृगुष्णिहो गः ' । २ । १ । ६९ ॥ ऋत्विगिति, ऋतुः प्रयोजनं प्रवर्तको यस्येति वाक्ये " मयूर० " इति प्रयोजनशब्दलोपः । अत एव निपातनाद्वा । ऋतु प्रयोजन इत्यर्थकथनं वा । तत्र पक्षे ऋतुना हेतुभूतेन यजते इत्यर्थः । ननु ऋत्विग्दिगृदगिति गान्ता निपाताः क्रियन्तां किं गविधानेन ? सत्यम्, गनिपातने गत्वसंनियोगशिष्टैव ज्ञायेत ततो व्यावृत्तौ दधृषौ उष्णिहाविति न स्याताम् । गत्वे तु विहिते निपातनं सर्वत्र भवति, गत्वं तु पदान्त एव भवतीति । स्रगिति–स्रवति मस्तकादिकमिति " ऋत्विग् दधृग्० " इत्यनेन बहुवचनात्क्विप् ।

' नशो वा ' । २ । १ । ७० ॥ जीवतीति अच् । जीवस्य जीवतो नशनं " भ्र्यादिभ्यो वा " इति क्विप् ।

' सजुषः ' । २ । १ । ७३ ॥ रत्वापवादः, सभाव इति, अस्मादेव निर्देशात् ।

' अह्नः ' । २ । १ । ७४ ॥ लाक्षणिकत्वादिति अयमभिप्राय उणादयोऽव्युत्पन्नानि नामानीत्यस्मिन्पक्षे नाम्नः प्रतिपदोक्तस्य सम्भवाल्लाक्षणिकस्य न ग्रहणमिति । व्युत्पत्तिपक्षस्तु इह नाऽऽश्रितः ।

' रोर्लुप्यरि ' । २ । १ । ७५ ॥ अहरधीते इति " कालाध्वनो० " द्वितीया । अहः काम्यतीति " रोः काम्ये " इति नियमात् " अत्र्यये " इत्यनेन न सकारः । हे दीर्घाहोऽत्रेति, अत्र वाक्ये विभक्तेर्लुबस्ति तत्कथं रो न भवति ? सत्यं, लुपीति प्रत्यासत्त्या व्याख्येयम् । यदपेक्षया लुप् पदत्वमपि यदि तदपेक्षया भवति । अत्र तु वाक्यविभक्त्यपेक्षया लुप्, साक्षाद्विभक्त्यपेक्षया तु पदत्वम् । वाक्यविभक्त्यपेक्षयैव पदत्वमपि न वाच्यम् " वृत्त्यन्तोऽसषे " इति प्रतिषेधात् । रथन्तरमिति–रथं रथस्थं तरत्यतिक्रामति " भृवृजि० " इति खः, सामविशेषः । यातमिति कर्मणि क्तः ।

' घुटस्तृतीयः ' । २ । १ । ७६ ॥ अग्निमरिति अत्र संज्ञाशब्दत्वात् " घेजः कगम् " इति न भवति । अलाक्षणिकयोरिति " रः कखपफ० " इत्यादिलक्षणेनाऽकृत-

१ २-१-८१ । २ ३-१-११६ । ३ उणा ८७४ । ४ ५-३-११५ । ४ अ २-२-४१ । ५ २-३-७ । ६ ५-३-६ । ७ १-१-२५ । ८ ५-१-११२ । ९ २-१-८६ । १० १-३-५ ।

योरित्यर्थः । दुःखयतेर्दुःखपतेर्वेति सुखदुःखमित्यत्र दुःखधातुर्विसर्गान्वितो मतान्तरेण जिह्वामूलीयान्वितश्च पठ्यते । संयोगान्तलोप इति–ननु व्यञ्जननैरन्तर्यं संयोगः, न च विसर्जनीयजिह्वामूलीययोर्व्यञ्जनसंज्ञाऽस्ति । तत्कथं "पेदस्य" इत्यन्तलोपः ? सत्यं, कस्याऽऽदिः कादिरिति व्युत्पत्त्या अं अः इत्येतयोर्व्यञ्जनत्वे ततश्च "अं अः ≍क ≍प०" इति सूत्रे अं अः इति साहचर्यात् ≍क इत्यस्याऽपि व्यञ्जनत्वे संयोगान्तलोपो भवति । कण्ठ्यत्वाच्च स्थान्यासन्नो गकारः । न तु टऽप इत्यनेन साहचर्यम् । कुतः अं अः टऽप श्केत्यकरणात् । कश्चरतीति–यद्यप्यत्र हस्वस्य परेऽस्त्यास्तृतीयस्याऽप्राप्तिस्तथापि मातश्चरतीत्यादिषु प्राप्नोतीत्याह–विधानसामर्थ्यादिति ।

'गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये' । २ । १ । ७७ ॥ धातुरूपावयवस्येति, अत्र धातुरूपावयवस्येति विशेष्यम्, अस्य च समासद्वयं, पर्णघुडित्यादौ सिसाधयिषिते धातुरूपश्चाऽसावयवश्च गुह इत्यादिः । अवयवश्चावयव्यपेक्षयाऽभिधीयत इति पर्णगुह् इत्यादिः, समुदायोऽवयवी । तुण्डिभ् इत्यादौ तु साधयितुमिष्टे धातुरूपस्याऽवयव इति षष्ठीसमासः । धातुरूपं तुण्डिभ् इत्यादि, तस्याऽवयवो डिभ् इत्यादिः । समासद्वयेऽपि च कुण्डमुम्भति कुण्डोप् इति निरस्तम्, नहि कुण्डोप् इत्यस्य समुदायस्य मध्ये डोप् इति धातुरूपोऽवयवो नाऽपि धातुरूपस्याऽवयव इति आदिचतुर्थत्वाभावः । यद्वा धातुरूपस्याऽवयव इत्येवं षष्ठीसमास एव क्रियते, एवं च क्रियमाणे तुण्ढिप् इत्यादीनि आद्यन्तवदेकस्मिन्निति न्यायनिरपेक्षाणि सिध्यन्ति । पर्णघुडित्यादीनि तु आद्यन्तवदेकस्मिन्निति न्यायेन । न्यघूढ्वमिति–अयतन्या ध्वमि, सकि, "धुड्ह्रस्वा०" इति तस्य लुकि, अदि हत्वे घत्वे "तवर्गस्य०" इति धस्य ढत्वे; "ढस्तड्डे" इति ढलोपे रूपमिदम् । वर्णविधित्वेनेति–वर्णे सकाररूपे परतो विधिः । सिज्लुकि न भवतीति–ननु सिज्लोपात् पूर्वमेव किमिति नाऽऽदिचतुर्थत्वम् ? नैवम्, परस्मिन् लोपरूपे कार्ये विधेये आदिचतुर्थत्वस्याऽसदधिकारविहितत्वेनाऽसत्त्वात् । प्रत्यय इति किमिति–'ननु प्रत्ययाप्रत्यययोः प्रत्ययस्यैवेति' न्यायेन प्रत्यये एव भविष्यति किं प्रत्ययग्रहणेन ? सत्यम्, दद्ध्वः दद्ध्वहे इत्यत्र यदा उभयोः स्थाने इति न्यायेन ध्व इत्यस्य प्रकृतिप्रत्ययस्थाननिष्पन्नस्य प्रत्ययव्यपदेशः स्यात्तदा आदिचतुर्थत्वं भवेत् । सति तु प्रत्ययग्रहणे न्यायनिरपेक्षो यः प्रत्ययस्तस्मिन्नेव भवति नेतरस्मिन् प्रत्ययग्रहणसामर्थ्यात् ।

'धागस्तथोश्च' । २ । १ । ७८ ॥ नन्वत्र चकारकरणं किमर्थं स्ध्वोः पूर्वेणैव

१ २-१-८९ । २ १-१-१६ । ३ ४-३-७४ । ४ १-३-६० । ५ १-३-४२ ।

सिद्धत्वात् ? सत्यम्, यङ्लुपि " क्रियाव्यतिहार " इत्यात्मनेपदे से व्यतिघात्से इति स्यात्; कृते च चकारे व्यतिदात्से इत्येव न त्वादेश्चतुर्थः 'तिवा शवे'ति न्यायात् ।

'अधश्चतुर्थात्तथोर्धः' । २ । १ । ७९ ॥ अध इत्यत्र नञ् पर्युदासस्तेनाऽन्यस्मादपि शुद्धधातोरेव । पूर्वसूत्रे निमित्तत्वेनोपादानात्, इह तयोरित्यस्य पुनरुपादानं कार्यित्वार्थम् । चतुर्थादिति–ननु गडदबादेरित्यतश्चतुर्थान्तस्येत्यधिकारोऽनुवृत्त्यर्थः । अर्थवशादिति पञ्चम्यन्तं कृत्वा रूपाणि साधयिष्यन्ते किं चतुर्थादित्यनेन ? सत्यम्, क्लिष्टप्रतिपत्तिरियमिति सुखार्थम् । यङ्लुबन्तधयतेश्चेति, केवलस्य तु शवा व्यवधानाच्चतुर्थान्तत्वाभावात् । नामविहिते इति 'क्विबन्ता धातुत्वं न त्यजन्तीति' न्यायादपि न भवत्यध इति वर्जनाच्छुद्धधातोरेव परिग्रहात् ।

'नाम्यन्तात् परोक्षाद्यतन्याशिषो धो ढः' । २ । १ । ८० ॥ नामीति विशेषणाद्विशेष्ये तदन्तविधेर्भावात्तदन्तत्वे लब्धेऽन्तग्रहणं सुखार्थम् । रान्तादनिट् परोक्षा न सम्भवति, सेटस्तु तत्वरिढ्वे इत्यादि परेण विकल्प एव, तथाऽत्र रग्रहणाभावेऽपि नाम्यन्तादित्यत्र विहितव्याख्याने क्रियमाणे परत्वात् " ऋतां क्ङितीर् " इत्यनेन इरादेशे सत्यपि अतीर्ढ्वमित्यादीनि सिध्यन्ति किन्तु अदिढ्वं, अधिढ्वमित्यादीनि न सिध्यन्तीति रग्रहणमिति । तरतेः परस्मैपदिनोऽपि कर्मण्यात्मनेपदं, अतीर्ढ्वमित्यत्र " ऋवर्णात् " इति सिचः कित्त्वम्, अदिढ्वमित्यादौ " इश्च स्थादः " इत्यनेनेत्वं सिचः कित्त्वं च । इत्यभिधानादेव गुणो न भविष्यति किं कित्त्वेनेति न वाच्यं विधानस्य । अदितेत्यादौ ह्रस्वद्वारेण सिचो लुपि चरितार्थत्वादिति । अकृढ्वं, कृपीढ्वमित्यनयोः " ऋवर्णात् " इत्यनेन सिच् सीष्ट्वमोः कित्वाद्गुणाभावः । अपरध्वमिति " सो धि वा " इति विकल्पेन सिचो लुप्प्रवृत्तेः पक्षे अपगृहढ्वमित्यत्राऽद्यतनीध्वमि सिचि, धातुघकारस्य " चजः कगम् " इति कत्वे, "नाम्यन्तस्था०" इत्यनेन सिचः षत्वे, " तृतीयस्तृतीय० " इति षस्य डत्वे; " तवर्गस्य० " इति ध्वमो धस्य ढत्वे च सिद्धिः ।

'हान्तस्थाञ्जीड्भ्यां वा' । २ । १ । ८१ ॥ जिटः स्वतन्त्रत्वादिटस्तु प्रत्ययावयवत्वेन प्रत्ययत्वाद्धातोर्नाम्यन्तत्वाभावे पूर्वेण न प्राप्नोतीत्यप्राप्ते विभाषेयम् ।

'हो धुट्पदान्ते' । २ । १ । ८२ ॥ मधुलिहाविति–यदा 'गतिकारक०' इति न्यायान्मधुशब्दस्य लिह इत्यनेनाऽविभक्त्यन्तेन समासस्तदाऽन्तर्वर्तिविभक्त्यभावात् पदत्वप्राप्तिरेव नाऽस्ति । यदाऽपि लीढ इति कृत्वा मधुनो लिहाविति विभक्त्यन्तेन

१ ३-३-२३ । २ ४-४-११६ । ३ ४-३-३६ । ४ ४-३-४१ । ५ ४-१-७९ ।
६ २-१-८६ । ७ २-३-१५ । ८ १-३-४१ । ९ १-३-६० ।

समासस्तदाऽपि " धुटस्तृतीयोऽस्पे " इति पदत्वाभावात् झ्युत्पत्तपक्षाऽव्युत्पत्तपक्षे सिद्धमस्य-स्येति। ओजददिति-द्वित्वे स्थानिवद्भावादिति-ननु कथमत्र स्थानिवत्त्वम्। अकारेण सह केति द्विर्वचनं कर्त्तव्ये पूर्वविधित्वाभावात् ? सत्यम्, निमित्तापेक्षयाऽत्रापि प्राग्विधिरिष्यते। यद्वा ह् त् इत्यनयोः स्थानिवत्त्वमत्रैव। अत्रायमेव समुदायोपन्यासात् ह् त् इत्यस्याऽपि स्वरादेशः स्थानवत्वस्य प्राग्विधित्वमिति। यदि निमित्तापेक्षया प्राग्विधिरिष्यते, तर्हि नयनमित्यत्र स्वरादेशस्य गुणस्य स्थानिवद्भावेऽयादेशो प्राप्नोति ? सत्यम्, निमित्तापेक्षया प्राग्विधित्वं प्राप्तिरमिति।

' भ्वादेर्दादेर्घः '। २। १। ८३ ॥ यदि भ्वादेरित्यस्य दादेरिति समानाधिकरणं विशेषणं भवेत् तदाऽदुग्धेत्यादयोऽडागमे कृते दादित्वाभावान्न सिध्येयुरिति भ्वादेरित्यस्य दादेरिति व्यधिकरणं विशेषणं व्याख्यातम्। नन्वत्र सर्वेष्वपि प्रयोगेषु घस्य गः क्रियते तदा ग एव क्रियतां, किं घकरणेनेति ? सत्यम्, गकारे क्रियमाणे चतुर्थान्तत्वाभावाद्धोगित्यादौ " गडदबा० " इत्यादिचतुर्थत्वं न स्यात्।

' मुहद्रुहष्णुहष्णिहो वा '। २। १। ८४ ॥ षेलस्निह-स्नेहं स्निह्यति स्निह्यतीत्यर्थः। षेननार्थत्वं त्वस्य " वैरस्नेहना० " इति सूत्रे स्निह्यतेऽनेनेति स्नेहनमुदकादीति दर्शनाद्विज्ञायत इति। ननु किं मुहादयः स्वरूपेणोपादीयन्ते मुहादेरित्येवोच्यताम् ? न चैवं कृतेऽधिकारानां प्रथमस्तदनन्तरं धकरणात्, तर्हि पुषादिपन्मुहादिपरिगणनार्थमपि भविष्यतीत्याह-मुहादेरिति।

' नहाहोर्धतौ '। २। १। ८५ ॥ मुस्थानस्येति-अन्यस्याऽसम्भवात्, आत्थेति-स्नाहेरपि धकारे " अघोषे प्रथम० " इति तकारे कृते आत्थेति सिध्यतीत्युभयोरपि धकार एव क्रियतां किं तकारकरणेन ? न च सिवन्धत्विधानादेव धत्वं न भविष्यति, अन्यथा सिवो धत्वमेव विदध्यादिति वाच्यम्, यतो लाघवार्थं वदन्तेत्, अन्यथा " भृगः पत्रानां० " इत्यत्र सिवो ध इति सूत्रान्तरे कृते गौरवं स्यादस्मात् सूक्तं धत्वविधुरार्थमिति।

' चजः कगम् '। २। १। ८६ ॥ धुट्प्रत्यान्त इत्यस्य चजाभ्यां कगाभ्यां च प्रत्येकमभिसम्बन्धाद्यथासंख्याभावः, प्रत्येकमभिसम्बन्धश्च " प्रागिनात् ", " स्यादि-विभक्तिः " इति सूत्रनिर्दिष्टकत्वमत्वहसमापकात्। " धर्म्यायाम्य० " इति सूत्रे कक् इति निर्देशात्, " रोगाद्ये रके " इति रककनिर्देशाच्च यथासंख्याभावः। किञ्च यदि

१ १-१-२५। २ २-१-७७। ३ ५-४-६५। ४ १-१-५०। ५ ४-२-११८। ६ २-१-४८। ७ १-१-१५। ८ ५-१-२४। ९ ६-२-१।

सिद्धत्वात् ? सत्यम्, यङ्लुपि " क्रियाव्यतिहार " इत्यात्मनेपदे से व्यतिद स्यात्; कृते च चकारे व्यतिदात्से इत्येव न त्वादेश्चतुर्थः 'तिवा शवे'ति न

'अधश्चतुर्थात्तथोर्धः'। २। १। ७९ ॥ अध इत्यत्र नञ् पर्युद ऽन्यस्मादपि शुद्धधातोरेव। पूर्वसूत्रे निमित्तत्वेनोपादानात्, इह तयोरित्यर पादानं कार्यित्वार्थम्। चतुर्थादिति–ननु गडदबादेरित्यतश्चतुर्थान्तस्येत्यि सूत्रार्थः। अर्थवशादिति पञ्चम्यन्तं कृत्वा रूपाणि साधयिष्यन्ते किं चतुर्थाि सत्यम्, क्लिष्टप्रतिपत्तिरियमिति सुखार्थम्। यङ्लुबन्तधपतेश्चेति, केवलस्य व्यवधानाच्चतुर्थान्तत्वाभावात्। नामविहिते इति 'क्विबन्ता धातुत्वं न त्य न्यायादपि न भवत्यध इति वर्जनाच्छुद्धधातोरेव परिग्रहात्।

'नाम्यन्तात् परोक्षाद्यतन्याशिषो धो ढः'। २। १। ८० विशेषणाद्विशेषणे तदन्तविधेर्भावाच्चदन्तत्वे लब्धेऽन्तग्रहणं सुखार्थम्। न परोक्षा न सम्भवति, सेटस्तु सत्वारिढ्ढे इत्यादि परेण विकल्प एव, तथाऽ भावेऽपि नाम्यन्तादित्यत्र विहितव्याख्याने क्रियमाणे परत्वात् " स्तो ि नेन इरादेशे सत्यपि अतीर्ढ्वमित्यादीनि सिध्यन्ति किन्तु अदिर्ढ्वं, अधिढ्वि सिध्यन्तीति रग्रहणमिति। स्रतेः परस्मैपदिनोऽपि कर्मण्यात्मनेपदं, " स्रवैणीत् " इति सिचः कित्त्वम्, अदिढ्वमित्यादौ " इर्णे स्वादः " इत्य कित्वंच। ह्रस्वविधानादेव गुणो न भविष्यति किं कित्वेनेति न वाच्यं अदितेत्यादौ ह्रस्वद्वारेण सिचो लुपि चरितार्थत्वादिति। अकृढ्वं, कथं " स्रवैर्णात् " इत्यनेन सिच् सीध्वमोः कित्वाद्गुणाभावः। अपग्ध्वमिति ' इति विकल्पेन सिचो लुप्प्रवृत्तेः पक्षे अपगृह्ढ्वमित्यत्राऽद्यतनीध्वमि चकारस्य " चैजः कगम् " इति कत्वे, "नाम्यन्तस्था०" इत्यनेन सिचः ' स्तृतीय० " इति पस्य हत्वे; " तेवर्गस्य० " इति ध्वमो धस्य ढत्वे च

'हान्तस्थाञ्जीड्भ्यां वा'। २। १। ८१ ॥ लिटः स्वतन्त्रत्वा धवयवत्वेन प्रत्ययत्वाद्धातोर्नाम्यन्तत्वाभावे पूर्वेण न प्राप्नोतीत्यप्रा

'हो धुट्पदान्ते'। २। १। ८२ ॥ मधुलिहाविति–यदा 'र न्यायान्मधुशब्दस्य लिह् इत्यनेनाऽविभक्त्यन्तेन समासस्तदाऽन्तर्व पदत्वप्राप्तिरेव नाऽस्ति। यदाऽपि लीढ इति कृत्वा मधुनो लिहावि

---

१ ३-३-२३। २ ४-४-११६। ३ ४-३-३६। ४ ४-३-४१ ६ २-१-८६। ७ ३-३-१९। ८ ४-३-४६। ९ १-३-६०।

इति गत्यस्य परेऽमध्याचदादेशस्य कत्वस्याऽप्यसत्त्वे द्वाङ्गनिकलता स्यात् । मांगपिपक्षिति-नन्वत्र " स्वैरस्य० " इति स्थानिवद्भावेन पदान्ते संयोगस्याऽभावात् ककारलोपो न प्राप्नोति । न चाऽस्मद्विधौ स्थानिवन्निषेध इति वाच्यम् । अरम्लुगिति वचनात् ? सत्यम्, अरम्लुकीति नभ्निर्दिष्टस्याऽनित्यत्वेन स्थानिवत्त्वाभावात् प्राप्तिर्विद्यते; यथा मधुगित्यत्र ।

' पदस्य ' । २ । १ । ८९ ॥ पदान्ते वर्तमानस्येति-पदस्य विशेष्यस्य "विशेषणमन्त " इति परिभाषया पदान्ते इति व्याख्यातम् । भूयानिति-अपदसंज्ञकेऽपि तद्धिते " असर्वैयम्सुनोऽम् " न, " भूँर्ब्रह घ० " इत्यत्रोऽकारप्रक्षेपात् । नियानं भूमेस्यत्र पदसंज्ञके चरितार्थम् सामर्थ्यान्न भवतीति, अन्यथा प्रक्रियालाघवार्थं ककारमेव विदध्यादित्यर्थः ।

' रात्सः ' । २ । १ । ९० ॥ रात्परस्य सस्यैवेति-यद्येवं अविमः अजाग इत्यादि विभर्त्तेर्जागर्तेश्च सस्तन्या दिवि, " ईच शिवि " इति द्वित्वे अरवे " पृभृ० " इतीत्वे, " द्विंशीय० " इति यत्ये, गुणे च नियमाल्लोपो न प्राप्नोतीति । नैवम् प्रकरणात् पूर्वप्रविहितस्यैवाऽयं नियमो न व्यञ्जनादेरित्युत्तरस्त्रविहितस्य, यद्वा यत्रे द्वितकारनिर्देशो ज्ञातव्यः । द्वितकारनिर्देशेऽपि न कोऽप्युच्चारणकृतो भेदोऽस्ति ततश्च रात्परस्य तकारसकारस्यैव लुक् नाऽन्यस्येति सूत्रार्थः सम्पद्यते । यद्येवं तर्हि कीर्तयतेः क्विपि कीरिति प्राप्नोति । अत्र भाष्यं-लोके प्रयुक्तानामिदमन्वाख्यानं लोके च कीर्त् इत्येव दृश्यते न कीरिति । अजर्घा इति-नन्वत्र " सेः स्था० " इति सेर्लुकि कृते च कर्तव्ये " गवधा० " इति धत्वस्याऽसत्त्वात् कृते रत्वे रात्परत्वाभावात् कथं धकारः ? सत्यम्, '<u>असिद्धं बहिरङ्ग</u>' इति भविष्यति ।

' नाम्नोलोऽनह्नः ' । २ । १ । ९१ ॥ अत्र रेफेति, नन्वत्र निशेषविधानात् " रो लुप्यरि " इति " अर्हं " इति च रेफत्वे पर मरिष्यतः किमहन्प्रतिषेधेनेत्याह-असत्त्वादिति । न चैवं, तयोरनवकाशत्वेत्याह-मानवाञमिति । रेफत्वलक्षणं । सम्बोधने इति-" नाऽऽमन्त्र्ये " इति नलोपप्रतिषेधात् । अहश्चादितमिति-लक्षणप्रतिपदोक्तयोरिति प्रतिपदोक्तस्यैवाऽहन्शब्दस्य निषेध इत्यत्र प्राप्तिः । पर नाम्न इति व्यावृत्त्या निषिध्यते । शुत्रहम्यामिति-धातुमात्राश्रितत्वेन लोऽन्तोऽन्तरङ्गो वाद्यम्याऽऽद्यपेक्षणान्नलोपो बहिरङ्गः ।

---

१ ७-४-११० । २ ७-४-११३ । ३ ७-४-७० । ३ अ ७-४-७१ । ४ ४-१-१२ । ५ ४-१-५८ । ६ ४-३-४२ । ७ ४-३-७६ । ८ ३-१-७७ । ९ ८-१-७८ । १० २-१-७४ । ११ २-१-५९ ।

धुट्पदान्त इत्यनेन सह यथासंख्यमभिप्रेतं स्याचदा "ऋत्विज्०" इत्यधिकारे जग्रहणं कृत्वा गत्वं विदध्यादिति। अथाऽत्र सूत्रे किमर्थमादेशद्वयविधानं यावता कविधानं गविधानं वा क्रियतां, यथालक्षणं कस्य गत्वे गस्य कत्वे च सर्वकार्यसिद्धेः। सत्यम्, गाभावे लघादयः काभावे पक्कादयो न सिध्येयुरिति कगग्रहणम्।

'यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राजः शः षः' ।२।१।८७॥ क्त्विरेव धुडिति–"तेर्ग्रहादिभ्यः" इति नियमात् क्तौ इडभाव इत्यर्थः। ननु यङ्लुबन्तयोरनयोरन्योऽपि तिवादिधुट् सम्भवति तत्कथं क्त्विरेव धुडिति? सत्यम्, यङ्लुबन्तयोरनयोर्धातुपारायणिकानामेव मते प्रयोग इष्यते न वैयाकरणानामिति क्त्विरेवेत्युक्तम्। साहचर्यार्थमिति–न चाऽऽत्मनेपदानित्यत्वज्ञापनार्थं पुनः पाठ इति वाच्यं, तदा ह्यात्मनेपदिष्वेव पुनः पठ्येत। नाऽप्येकस्य द्वनुबन्धत्वादधुर्मथरयन्यस्य नेति वाच्यं यतः द्वनुबन्धादपि "असेरूपो०" इति सूत्रादुत्सर्गः प्रवर्तिष्यते तस्मादेकेनाऽपि धातुनाऽर्थभेदेन प्रयोगद्वयं सिध्यति परं साहचर्याय द्विः पाठ इति। कथमसृगिति–नञ्पूर्वस्य सृजेः क्विबन्तस्य षत्वेन भाव्यं तत्कथं गत्वमित्याह–औणादिकस्येति–अस्यत इति न सृज्यत इति वा "ऋधिपृषि०" इति क्विदपि बाहुलकादेकत्राऽस्य ऋत्वेऽन्यत्र जकाराकारयोर्लोपे चाऽसृज्शब्दसिद्धिः। पथिप्राच्छाविति–पन्थानं पृच्छता "दिद्युद्०" इति क्विप्, धुटि पदान्ते च पूर्वाण्येवोदाहरणानि व्याप्तौ तु विशेषः। स्वमते तु पथिप्राशावित्याद्येव भवति।

'संयोगस्यादौ स्कोर्लुक्' ।२।१।८८॥ संयुज्यन्ते वर्णा अत्रेति व्यञ्जनाद् घञि संयोगः। स च वैयाकरणसम्प्रदायाद् व्यञ्जननैरन्तर्यमुच्यते। 'दन्त्यापदिष्टमिति' न्यायाच्चालव्यशस्य लुग्दर्शितः दन्त्यस्य तु सस्पाऽश्वावगित्यत्र कङ्क् सङ्क्विति पठितस्य वस्केर्ज्ञेय इति। समुदायस्यैव लोपं विदध्यादिति–कया युक्त्या संयोगेति प्रथमं, पदस्येति द्वितीयं अन्ते चेति तृतीयं सूत्रं कुर्यात्। तत्राऽऽद्यस्याऽर्थः–धुटि प्रत्यये संयोगादिस्थयोः सकारककारयोर्लुग् भवति। द्वितीयस्याऽर्थः पदान्ते वर्तमानस्य सकारककारादिसंयोगस्य सकलस्याऽपि लुक्। तृतीयस्याऽर्थः–पदस्येत्यतः पदान्ते इत्यनुवर्तते। ततः पदान्ते संयोगसम्बन्धिनोऽन्तस्य लुग्भवतीत्यकरणाल्लुकः स्थानित्वं न भवति। अन्ये तु अतिटमिति–तन्मतस्वमतयोः "न सँधिद्वन०" इत्यत्र विशेषः, तन्मते अतिट्टिपत्, स्वमते अट्टिटिपत इति। पृथक्स्थावेति–पृथक्शब्दः कान्तोऽव्ययम्। न तु "ऋधिपृथि०" इत्यनेनाऽञ्प्रत्ययान्तो जन्तः। तदा "ऋजः०"

१ २-१-६५। २ ४-४-३२। ३ ५-१-१६। ४ उणा ८७४। ५ ५-२-८३। ६ ४-१-५
७ उणा ८७४। ८ १-१-८६।

मीयेते तदा इकण् नाऽऽगच्छति मेयवाचित्वाद् द्रोणस्य । यद्वा द्वयोर्द्रोणयोः समाहारो द्विद्रोणम् । पात्रादित्वात् स्त्रीत्वाभावः । अत्र द्रोणो व्रीहिराढको व्रीहिरितिवत् द्रोणशब्दो मेयवृत्तिस्तेन धान्यस्य समानाधिकरणो द्विद्रोणशब्दः । एवं पञ्चकेन पशून् क्रीणातीति-पञ्चेतिसंख्यामानमस्य "संख्यायाः सञ्ज्ञासङ्घसूत्र०" इति यथा विहितः "संख्याडतेश्चा०" इति कः, पञ्चकं पञ्चकं सङ्घं पशून् क्रीणातीत्यर्थः । पञ्चकं पञ्चकमित्यत्र पशुसामानाधिकरण्येऽपि पञ्चकशब्दाद् ब्राह्मणाः सङ्घ इतिवदेकवचनम् । द्विद्रोणादय इति-आदिशब्दस्य प्रकारार्थत्वात् येभ्यो वीप्सायां प्रयोगे तृतीया गम्यते ते द्विद्रोणादयः, न तु गर्गादिवत् सन्निविष्टा इति ।

'समो ज्ञोऽस्मृतौ वा' । २ । २ । ५१ ॥ संजानीते इति-संप्रतेरस्मृताविति त्यात्मनेपदम् ।

'दामः सम्प्रदानेऽधर्म्ये आत्मने च' । २ । २ । ५२ ॥ नन्वनेन ब्राह्मणेन दानं प्रवृत्तमित्यादिवत् सम्प्रदानस्य करणत्वविवक्षायां दास्या सम्प्रयच्छत इत्यादौ तृतीयोत्पत्तेः किमर्थमिदमारभ्यते ? यद्वा सहार्थे इयं तृतीया । दास्यै स्वयं धनं ददाति साऽप्यात्मानं तस्मै ददातीति । दानपूर्वके सम्भोगे दाम् वर्तते । दत्त्वा दास्या सह सम्भुङ्क्ते इति । एवं चात्र क्रियाव्यतिहारोपपत्तेस्तद्द्वारेणैवाऽऽत्मनेपदम् । अत्रोच्यते-एवं हि धात्वन्तरेऽपि विनाऽपि समुपसर्गेणाऽधर्मत्वाभावेऽपि स्यात् । द्रव्यं वृषस्या सम्प्रयच्छत इत्यत्राऽपि सम्प्रदानविवक्षायां चतुर्थी स्यात् । अत इह चतुर्थीप्रत्युदाहरणेषु च तृतीया मा भूदित्येवमर्थमिदं वक्तव्यम् । विवक्षयाऽपि न सिध्यति । विवक्षानियमो हि विना वचनेन दुरधिगम इतीदमारभ्यत इति । ननु सम इति परदिग्योगलक्षणा पञ्चमी ततश्च "पञ्चम्या निर्दिष्टे" परस्य तत्राऽनन्तरस्येति प्रशब्दव्यवधाने न प्राप्नोतीत्याह-इह संपूर्वस्येति । यद्वा सम इति पूर्वत्र पञ्चम्यन्तमपीह लक्ष्यवशात् षष्ठ्यन्तं विज्ञायते । तत्र व्यवधानेऽपि समा द्योत्यमानार्थत्वाद्दामः सम्बन्धोपपत्तेर्भवत्येव विधिः ।

'तादर्थ्ये' । २ । २ । ५४ ॥ यूपाय दारु-अत्र यूपादिहेतुभूतस्य दार्वादेर्हेतुतृतीया नाऽगौणत्वात् ।

'रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु' । २ । २ । ५५ ॥ मूत्राय कल्पते यवागूः-यवागूः कर्त्री सम्पद्यते किं मूत्रं ? मूत्ररूपमित्यर्थः । ननु मूत्रयवागूशब्दयोर्द्वयोरपि सम्पद्यत इति क्रियया सह सम्बन्धाद् गौणत्वाभावात् कथं मूत्रशब्दा-

१ ६-४-१४१ । २ ६-४-१३० ।

चतुर्थी ? उच्यते–एतत्सूत्रसामर्थ्यादेवाऽत्र गौणमुख्यभावेन क्रियासम्बन्धात् मूत्रस्य गौणत्वम् । तथाहि–प्रथमं यवाग्वाः सह क्रियायाः सम्बन्धः पश्चान्मूत्रस्येति । गौणादिति व्यावृत्त्युदाहरणे तु मूत्रादेर्विशेष्यार्थं मूत्रादिकं प्रथमं क्रियया सम्बन्धनीयम् । यद्वा मूत्रायेति कोऽर्थः ? मूत्ररूपविकारसम्बन्धित्वेन यवागूः सम्पद्यत इत्यर्थः । चैत्राय शतं धारयति–ध्रियते तिष्ठति स्वरूपान्न प्रच्यवते शतं कर्तृ, तत् ध्रियमाणं, प्रयुङ्क्ते इति णिग्, अपरपठितश्चुरादौ वा ।

'प्रत्याङ्भ्यां श्रुवोऽर्थिनि' । २ । २ । ५६ ॥ याचितोऽयाचितो वेति–अधमत्या-याचमाने महत्त्वादयाचमानेऽपि प्रतिजानीते प्रतिपद्यतेऽभ्युपगच्छतीत्यर्थः ।

'प्रत्यनो गृणाऽऽख्यातरि' । २ । २ । ५७ ॥ आचार्यं गृणातीति–आचष्ट इत्यर्थः, अत्राऽऽचार्यमाचक्षाणमिति प्रतिपत्तव्यम्, अन्यथा ह्यद्वयविकलता स्यात् ।

'यद्वीक्ष्ये राधीक्षी' । २ । २ । ५८ ॥ विविधा विशेषानुपलम्भादेकस्मिन् वस्तुनि सादृश्यादिनिमित्तादनेकपक्षालम्बनानवधारणात्मिका मतिर्विमतिः, सन्देह-ज्ञानमिति यावत् । तत्पूर्वकं निरूपणीयम् । अदृष्टमिष्टानिष्टफलं पुण्यपापरूपमप्रत्यक्षं पराभिप्रायादिकं वा । विप्रश्नविषय इति–विचारविषयो दैवादिर्लाभालाभादिर्वा । क्रिया-ऽपीति–पर्यालोचनादिका । तस्य दैवमिति–शुभाशुभमित्यर्थः । दैवे एवेक्ष्ये इति–न स्वभिप्रायादावित्यर्थः । राधीक्षिभ्यां योगाभावादिति–एवं तर्हि मैत्राय राध्यतीत्यादावपि सम्बन्धाभावान्न स्यात् ? न, तत्र मैत्रेणैव सह राधीक्ष्योः सम्बन्धो विवक्षितोऽन्य-स्याऽश्रुतत्वात् । राधीक्ष्यर्थधातुयोगेऽपीच्छन्त्येक इति–पाणिनिव्याख्यातारः, मैत्राय राधयतीतिराधिश्चुरादिरपरपठितोऽत्र गृह्यते इच्छन्ति पाणिन्यादयः ।

'उत्पातेन ज्ञाप्ये' । २ । २ । ५९ ॥ उत्कम्प्य प्रसिद्धं निमित्तं पततीति बाहुलकात् सोपसर्गादपि "धा ज्वलादि०" इति णः । निमित्तं द्विधा जनकं ज्ञापकं च । यत्र तादर्थ्यं तत्र जनक एव हेतुः, यथा रन्धनाय स्थाली । अत्र तु तादर्थ्या-भावात् ज्ञापक एव हेतुः, पश्चयपवाद इति–ज्ञाप्यज्ञापकसम्बन्धविवक्षायामित्यर्थः ।

'श्लाघह्नुङ्स्थाशपा प्रयोज्ये' । २ । २ । ६० ॥ 'ह्नुङ्' सम्पर्चने, प्रयोजयत इति "ये एञाऽत" इति ये प्रयोक्तुं शक्य इति वा, "शकाहें०" इति घ्यणि, "निप्रोज्जः शक्ये" इति गत्वाभावे, द्वितीया प्राप्तौ वचनम् । मैत्राय तिष्ठते–अत्र "ह्रोपसंस्थेये" आत्मनेपदं स्थानेनाऽऽत्मानं ज्ञापयतीति । मैत्राय शपते–"शप उपलम्भने" इत्या-

१ ५-१-६२ । २ ५-१-३८ । ३ ५-४-३५ । ४ ४-१-११६ । ५ ३-३-६४ । ६ ३-३-३५ ।

त्मनेपदम् । श्राद्धा मात्रादिशरीरस्पर्शने नाऽहं जाने न मया कृतमिति मैत्रं ज्ञापयतीत्यर्थः । केचिच्चिदिति भोजशाकटायनाः । यस्तु मैत्रादिर्जानन् ज्ञाप्यते तत्र न भवतीति । तथा चाऽन्येषां ग्रन्थे द्विकर्मकोऽयं ज्ञापितस्तत्र केचिद्यस्मै आख्यायते तद् ज्ञाप्यं सम्प्रदानत्वेन प्रतिपन्नाः । केचिद्य आख्यायते तमिति ।

' तुमोऽर्थे भाववचनात् ' । २ । २ । ६१ ॥ भवनं भावो " भावाकर्त्रोर्घञ् " वक्तीति ब्रवीतीति वा " रम्यादिभ्यः कर्तरि " अनट् । भावस्य वचनो भाववचनस्तस्मात् । पाकायेति–पक्तुं पक्ष्यत इति वा वाक्ये " भाववचनाः " इति घञादयः ।

' गम्यस्याप्ये ' । २ । २ । ६२ ॥ शब्दो ह्यर्थवानपि अप्रयुज्यमानः प्रयुज्यमानश्च भवति । अप्रयुज्यमानश्चाऽर्थप्रकरणशब्दान्तरसन्निधानैः प्रतीयमानार्थः स च गम्य इत्युच्यते । एधेभ्यो व्रजति–नन्वेधार्थं व्रजतीति तादर्थ्य एव चतुर्थी भविष्यति किमनेन ? उच्यते–क्रियायां एधाहरणार्थतायामिति न सिध्यति ।

' गतेर्नवाऽनाप्ते ' । २ । २ । ६३ ॥ गतिशब्दस्य ज्ञानाद्यर्थत्वेऽप्यनाप्त इति वचनात् पादविहरणरूपैव गतिर्गृह्यते । ज्ञानादिव्याप्यस्याऽनाप्तत्वासम्भवादित्याह–गतिः पादविहरणमिति । स्त्रियं गच्छति–भजनार्थोऽत्र गमिर्न गत्यर्थ इति न चतुर्थी । पन्थानं गच्छतीति–अनाप्तेऽसम्प्राप्ते कर्मणि चतुर्थी, पन्थास्तु सम्प्राप्त इति चतुर्थ्यभावः । चतुर्थी चेत्यन्य इति विश्रान्तन्यासकर्ता यशोनन्दी ।

' मन्यस्यानावादिभ्योऽतिकुत्सने ' । २ । २ । ६४ ॥ न त्वा तृणाय मन्ये बुस्यति त्यजत्युपादेयभावमिति " नाम्युपान्त्य० " इति के बुसम् । न त्वा नावं मन्ये, नावादयो लक्ष्यदर्शनेनाऽनुसर्तव्याः । अथ नावन्नयोरत्यन्तोपकारकत्वात् कथमतिकुत्सनत्वं गम्यत इत्याह–नावन्नयोरपीति । परेण स्वेच्छयाऽभिमतं स्थानं पराधीनवृत्तित्वात् प्रकर्षेण नीयत इति परप्रणेयस्तस्य भावः परप्रणेयता । अनापाताच्छेद्यत्वादिभिरिति–आदिशब्दादचेतनत्वविनश्वरत्वादिग्रहः । कुत्स्यतेऽनेनेति–युष्मदोऽपि मन्यव्याप्यत्वात् पक्षे चतुर्थी प्राप्नोतीत्याह–युष्मदो न भवतीति । कुत्सामात्रेऽपीच्छन्त्येके इति पाणिन्यादयः । परत्वात्षष्ठीति–" कर्मणि कृतः " इत्यनेन तृणशब्दात्सिद्धयं षष्ठी । युष्मच्छब्दात्तु " वैकत्र द्वयोः " इति षष्ठीविकल्पाद् द्वितीया । यदा तु युष्मदयतः " कर्मणि कृतः " इत्यनेन नित्यं षष्ठी तदा तृणशब्दात् " वैकत्र द्वयोः " इत्यनेन विकल्पेन षष्ठी । तद्विकल्पपक्षे चतुर्थ्यपि । न तव तृणाय मन्ता तृणस्य मन्ता तृणं मन्ता वेति । चतुर्थ्यपीति कश्चिदिति–अजितयशोवादी दुर्गसिंहश्च । " कर्मणि कृतः " इत्यनेन

१ ५-१-१४ । २ ५-३-११६ । ३ ५-१-१५ । ४ ५-१-२४ । ५ २-१-६१ । ६ १-१-८५ ।

षष्ठीप्राप्तौ " नैकत्र द्वयोः " इत्यस्य तु पक्षे सिद्धैवेति । न त्वं सुसो मन्यसे । अत्र विशेषणविशेष्यभावेनोभयमपि कर्म उक्तम् । यथा कटः क्रियन्ते वीरणानि ।

' हितसुखाभ्याम् ' । २ । २ । ६४ ॥ इति आतुरायेति, 'तुर' त्वरणे, पठितो जुहोत्यादौ द्रष्टव्यः ।

' तद्भद्रायुष्यक्षेमार्थार्थेनाशिषि ' । २ । २ । ६६ ॥ भद्रक्षेमार्थयोरन्यत्रैकार्थ्येऽपि क्षेममापदोऽभावो भद्रं सम्पदुत्कर्ष इत्यर्थभेदाद् द्वितयोपादानम् । आयुष्यमस्तु चैत्रायेति–आयुः प्रयोजनमस्य घृतादेरायुष्यं घृतादि । ततश्च दीर्घमायुरस्तु मैत्रायेत्यादौ चतुर्थी न प्राप्नोति । यत आयुःशब्देन जीवितमेवाऽभिधीयते न तु जीवितकारणं घृतादिकं, उच्यते–कार्ये कारणोपचारात्, यथेन्द्रः स्थूणा । यदा त्वायुरेव भेषजादिस्वार्थे त्यणायुष्यशब्दो निष्पाद्यते तदा निर्विवादं सिद्धमेव । तद्ग्रहणमिति–तर्हि प्रागप्यर्थग्रहणमस्तु, सत्यम्; तदर्थानामाशिषि नियमार्थमिदम् ।

' परिक्रयणे ' । २ । २ । ६७ ॥ वेतनादीति–आदिशब्दाद्भाटकादिपरिग्रहः । करणाश्रयणं किमिति करणाश्रयणं विना परिक्रीयतेऽस्मिन्नित्यनया व्युत्पत्त्या मासादपि स्याच्चतुर्थी । शताय परिक्रीतो मासमिति–क्रीत इति रूपं कर्मणि कर्तरि वा, तथाहि–परिक्रीयते स्म परिक्रीतः कः ? कर्मतापन्नश्चैत्रः, कं मासं ? कोऽर्थो मासे; यद्वा परिक्रीणीते स्म कर्तरि क्तः कर्मणोऽविवक्षितत्वात् । अथाऽत्र मासमिति कर्म विद्यते तत्कथं कर्तरि क्तः ? उच्यते, मासमित्यत्र " कालाध्वभाव० " इत्यनेनाऽऽधारस्य युगपत्कर्मसंज्ञाऽकर्मसंज्ञा च, तत्र कर्मसंज्ञायां कर्मणि द्वितीया, अकर्मसंज्ञायां तु कर्तरि क्तः ।

' शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः ' । २ । २ । ६८ ॥ पृथग्योगाद्वेति निवृत्तमिति–तत्र कश्चित् सामस्त्येन पृथग्योगः कश्चिदेकदेशेन सम्भवति । अत्र तावदेकदेशेन, तथाहि–हितसुखाभ्यामित्यनेन स्वस्तिशब्दस्यैकयोगाकरणात् । एकयोगे च कृतेऽनाशंसायां हितसुखस्वस्तिभिरित्यनेन आशंसायां तु तद्भद्रेत्यनेन, तदिति पूर्ववस्तुपरामर्शेन क्षेमद्वारेण वा विकल्पः सिद्ध एव, तदकरणाद्वेति विकल्पमित्यर्थः । ननु कथमत्रैकदेशेन पृथग्योगो न सामस्त्येन ? उच्यते–तद्भद्रेत्यत्र व्यभिचारात् । तथाहि तद्भद्रेत्यत्राऽर्थपरो निर्देशोऽयं तु शब्दपर एवेति । " परिक्रयणे " इत्यनेन त्वेकयोगत्वं न व्याख्येयमर्थस्याऽसङ्गतेः । तत्र हि परिक्रयणे वर्तमानान्नाम्न इत्युक्तम् । अनेन त्वेकयोगे वषडादिवत् परिक्रयणशब्दस्वरूपपरिग्रहः स्यादिति । परत्वान्नित्यमेवेति ननु " स्पर्धे " परः समानविषयो स्पर्ध इति समानविषयत्वं,

---

१ २-२-८५ । २ २-२-९३ । ३ २-२-६७ ।

" तद्धद्रा० " इत्यस्य दर्शयति, तथाहि—स्वस्ति जाल्मायेत्यत्र जाल्मत्वेनाऽऽशीरभावात्तस्याख्यानमिदमिति स्वस्तिचतुर्थ्या अवकाशः । क्षेमं भूयात् सखायेत्यत्र तु क्षेमचतुर्थ्या अवकाशः । स्वस्ति प्रजाभ्य इत्यत्रोभयप्राप्तौ परत्वादाशिष्यपि नित्यं स्वस्तिचतुर्थी भवतीत्यर्थः । नमसेति—यद्यऽस्तु नमसा योगः तथापि नमः शब्दस्याऽर्थवतो ग्रहणादनर्थकयोगे न भवति । अत्र हि नमस्यधातुरर्थवान्न तु तदेकदेशो नमः शब्द इति । अथवा पदान्तरसम्बन्धानपेक्षणादन्तरङ्गया द्वितीयया कारकविभक्त्या उपपदविभक्तिस्तदपेक्षणाद्बहिरङ्गा चतुर्थी बाध्यते । 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' ति न्यायात् । ननु कारकविभक्तिरपि क्रियापदापेक्षणीति कथमन्तरङ्गा ? नैष दोषः कारकस्य क्रियामात्रसम्बन्धाव्यभिचारात् । यद्येवमिति—कारकविभक्त्या द्वितीयया बाध्यमाना कथमत्र चतुर्थीति प्रश्नार्थः ।

'आङ्मर्यादावचने' । २ । २ । ७० ॥ प्रवृत्तस्य यत्र निरोधः स मर्यादा । मर्यादाभूतमेव यदा क्रियया व्याप्यते तदाऽभिविधिः । पाटलिपुत्रमवधीकृत्येति—एतादृशार्थ आङा द्योत्यते ।

'पर्यपाभ्यां वर्ज्ये' । २ । २ । ७१ ॥ वर्ज्यवर्जकसम्बन्धः पर्यपाभ्यां द्योत्यत इति, " वाक्यस्य परिवर्जने " इत्यनेन परिपरीत्यत्र द्वित्वम् । अपशब्दो मैत्रस्य—अपगतः शब्दात् । तत्पुरुषस्य पूर्वपदप्रधानत्वात् पूर्वपदेन अप इत्यनेन सह मैत्रशब्दस्य योगोऽस्तीति, न वर्ज्य इति व्यावृत्तेर्व्यर्थविकलता । अत्र मैत्रशब्दात् मा भूत् ।

'यतः प्रतिनिधिप्रतिदाने प्रतिना' । २ । २ । ७२ ॥ प्रतिनिधीयत इति—प्रतीतः सन् मुख्यस्थाने निधीयत—आरोप्यते—सदृशः क्रियते इति तात्पर्यार्थः । तुल्यजातीयेनाऽतुल्यजातीयेन वा विशेषणमिति शेषः । प्रद्युम्नो वासुदेवात् प्रति । तुल्यजातीयेनाऽतुल्यजातीयेन वा विशेषणमिति शेषः । प्रद्युम्नः सदृशः क्रियते, केन गुरु ? वासुदेवेगुणैर्निर्णीयते " तुल्यार्थैरतुलो माऽसौ हि " प्रद्युम्नः सदृशः क्रियते, केन सह ? वासुदेवेनेति " तुल्यार्थै० " इति तृतीयाषष्ठ्योः प्राप्तिः । श्रेणीः क्रापयति प्रमम्भपथुपेति श्रेणिकस्तस्मात् " प्रतिना पञ्चम्याः " इति सम् । तिलेभ्यः प्रतीति—प्रयच्छति प्रददाति, कान् माषान् ? कथम्भूतान् प्रति ? प्रतिदानभूतान्, कर्मा तिलानामिति प्रतिशब्दात् द्वितीयैकवचनम् । प्रति सिध्यति—षिधिरिह दाने, नाऽत्र सिधा प्रतिना योगोऽपि तु सर्पिष इति " वैयाकरणि० " इत्यनेनोपसर्गसंज्ञाभावाच्च परत्वम् ।

'आख्यातोपयोगे' । २ । २ । ७३ ॥ नियमपूर्वकेति—नियमो विद्याग्रहणार्थं

१ ७-१-८८ । २ वार्त० १११ । ३ १-१-११६ । ४ ७-१-८४ । ५ १-४-९१ ।

'स्तोकाल्पकृच्छ्रकतिपयादसत्त्वे करणे' । २ । २ । ७९ ॥ यतः स्तोकत्वादेर्निमित्तत्वाद्द्रव्ये विशेष्ये स्तोकादिशब्दप्रवृत्तिः, स गुणोऽसत्त्वं शब्दस्य प्रवृत्तिनिमित्तमित्यर्थः । तेनैवेति–असत्त्वरूपेणाऽयमर्थस्तिरोहितधनादि विशेष्यं स्तोकादिरूपेणैव सामान्यात्मनाऽभिधीयमानं धनादिरूपव्याप्तं स्तोकादिरूपापन्नं द्रव्यं गुणः क्रिया वा यदा प्रतीयते तदा द्रव्याद्यसत्त्वमिति । स्तोकान्मुक्त इति–"असत्त्वे ङसेः" इति पञ्चम्यलुप् । असत्त्ववाचित्वादिति–द्रव्यस्यैव विशेषसंख्यायोगित्वादिति शेषः । द्वित्वबहुत्वासम्भवे इति–एकत्वनिबन्धनैकवचनस्याऽप्यसम्भवे औत्सर्गिकमेकवचनम्, स्तोकादिशब्दानां स्तोकार्थाभिधायकत्वेनाऽसत्त्ववाचित्वात् क्रियां प्रति साधकतमत्वाभावात् करणत्वाभावे कथमनेन पञ्चमीत्याशङ्कायाममीषां पूर्वाचार्यप्रसिद्ध्या करणत्वमाह–यद्वा स्तोकेन राहुणा मुक्तः शशीत्यादौ मोचनामोचनलक्षणं क्रियाद्वयं विद्यते । यतः स्तोकेन मुक्त इति–कोऽर्थः ?, किञ्चिन्मुक्तः किञ्चिदमुक्त इत्यर्थः । ततश्च कस्यायाः क्रियाया अपेक्षयाऽत्र करणसंज्ञेत्याह स्तोकेत्यादि, स्तोकस्याऽभिनिर्वृत्तिं निष्पत्तिं स्तोकस्य चाऽनिर्वृत्तिमनिष्पत्तिमाश्रित्य स्तोकादीनां करणत्वप्रसिद्धिमाचक्षते पूर्वाचार्याः ।

'अज्ञाने ज्ञः षष्ठी' । २ । २ । ८० ॥ वेति निवृत्तम् । भिन्नविभक्तिविधानादिति शेषः । सर्पिषो जानीतेऽत्र "ज्ञः" इत्यात्मनेपदम् । अत्र करणस्य सम्बन्धिविवक्षया सर्पिष इदं ज्ञानं नाऽन्यस्येति षष्ठी सिध्यतीति किमर्थोऽयं योग इत्याह–तृतीयापवादो योग इति–अयमर्थः, सिध्यति षष्ठी किन्तु करणविवक्षायां तृतीया मा भूदित्ययं योगः । सार्पिषामिति–आत्मगव्यमाहिषाणां घृतानामित्यर्थः ।

'शेषे' । २ । २ । ८१ ॥ क्रियाकारकपूर्वक इति–क्रिया च कारकं च क्रियाकारके ते पूर्वे यस्य स तथा यथा राजपुरुषः । राजा कर्ता पुरुषं बिभर्ति अतो राजपुरुष इत्युच्यते । कर्माद्यविवक्षालक्षण इति कर्मादिभ्योऽन्य इति तु विशेषेभ्योऽन्यत्वं विवक्षितं न तु सामान्यादनाश्रितविशेषात् कारकादपि । अश्रूयमाणक्रियो यथा राजपुरुष इत्यादि, श्रूयमाणक्रियो यथा न माषाणामश्नीयादित्यादि । अस्येदं शब्दस्य यो भावः प्रवृत्तिनिमित्तं स भावो रूपं यस्य स सम्बन्धविशेष इति–असंबन्धाद् भिद्यमानः सम्बन्धः सम्बन्धविशेष उच्यते, यावता सम्बन्ध इत्युक्तेऽपि सिध्येद्, विशेषज्ञापनायोक्तम् । प्रथमापवाद इति–एकद्विबहावितिं संख्यामात्रमुपादाय नाम्नः प्रधानादप्रधानाच्च सामान्येन प्रथमा विधीयते तत्राऽयं षष्ठीविधिर्माभूदिति, विशेषमुपादाय प्रवर्तमानस्तदपवादो भवति ।

'रिरिष्टात्स्तादस्तादसतसाता' । २ । २ । ८२ ॥ परस्तादिति–परः परा वा

१ १-२-१० । २ १-१-८१ ।

प्रकृतिस्ततः " परावराक्तात " " सर्वादयोऽस्यादौ " इति पुम्भावः । दक्षिणपश्चादिति- दक्षिणा च साऽपरा च दक्षिणाऽपरा तस्यां वसति । विप्रभृतयः प्रत्ययाः स्वार्थिका दिक्शब्देभ्यो विधीयन्तेऽतस्तदन्ता अपि दिक्शब्दा एवेति " शेषे " इत्यस्याऽप- वादः । " प्रभृत्यन्यार्थ० " इति पञ्चमी विधीयते । अत एव दक्षिणा ग्रामाद्रमणीयं, दक्षिणाहि ग्रामाद्रमणीयमिति " षष्ठी० " इति प्रत्ययद्वययोगे षष्ठी न लभ्यते इत्याह पञ्चम्यपवाद इति ।

' कर्मणि कृतः ' । २ । २ । ८४ ॥ द्वितीयापवाद इति, " कर्मणि " इत्यनेन प्राप्तायाः । पुत्रपौत्राणामिति-पुत्रस्याऽपत्यमनन्तरं " पुनर्भूपुत्र० " इति अञ् । पुत्रस्य पौत्राः पुत्रसहिताः पौत्रा वेति विग्रहः, द्वन्द्वे तु " गवाश्वादिः " इति समाहृतिः स्यात् । पिबतीति पिबः, " घ्राध्मा० " इति शः । कृत इति किं ? अयमर्थः, ननु कर्म कारकं तच क्रियामन्तरेण न सम्भवति । यतः क्रियायाः कारकं कारकं भवति । क्रिया च प्रत्ययसहितं धातुमाक्षिपति, धातोश्च द्वये एव प्रत्यया विधीयन्ते त्यादयः कृतश्च । तत्र " तं पर्यंति० " इत्यादि ज्ञापकात् त्यादिप्रयोगे द्वितीयाविधानात्कृत् प्रयोग एव षष्ठी भवति किं कृद्ग्रहणेनेति ? नैवम्, कृद्ग्रहणमन्तरेण तद्धितप्रयोगेऽपि यत्कर्म तत्राऽपि षष्ठी स्यात्तन्निषेधार्थं कृद्ग्रहणम् । कृतपूर्वीकटमिति-वर्तते कः ? कर्ता कृतपूर्वी पूर्वं कृतवानित्यर्थः । कं ? कृतपूर्वी कटम् । तत्र यथा चित्रगुरित्यादौ बहुव्रीहिणा स्वामि- सामान्येऽभिहिते विशेषाभिधानाय चैत्रादिः प्रयुज्यते तथाऽत्राऽपि सामान्यकर्मण्य- भिहिते विशिष्टकर्माभिधानाय कटादेः क्तेनाऽनभिहितस्य द्वितीयान्तस्य प्रयोगः । कथमिति-त्यागोऽस्याऽस्तीति इनि तद्धिते-प्रत्ययेऽर्थस्येत्यादि कर्मणि षष्ठी न प्राप्नो- त्याशङ्कार्थः । " युजभुज० " इति घिनण् । " जीण् दृशि० " इति " भीरुष्ठानेरिम् " इति यथाक्रमं त्यागीत्यादिषु प्रत्ययाः ।

' वैकत्रद्वयोः ' । २ । २ । ८५ ॥ द्वयोः कर्मणोरिति-ननु कृत इत्यस्यैव षष्ठ्य- न्तस्य द्वयोरिति कस्मान्न विशेषणं, तत्राऽपि हि द्वयोः कृदन्तयोरेकं यत्कर्म तत्र षष्ठी वा भवतीत्ययं सूत्रार्थो घटते, तथा च अपां स्रष्टा, भेत्ता च मैत्र इत्यादावेव विकल्पः स्यादिति, नैवम्; एवं सति कर्मणि कृतो द्वयोश्च चेत्येकमेकयोगं कुर्यात् । एवं च सति एकस्य कृतः कर्मणि नित्यं षष्ठी भवति द्वयोस्तु कृदन्तयोर्वा भवतीति सूत्रार्थे मम- स्तार्थस्य सिद्धत्वात् । तस्मात् पृथग्योगात् कर्मण एव विशेषणं न कृत इत्यस्य ।

---

१ ७-२-११६ । २ ३-२-६१ । ३ ७-२-७५ । ४ ७-२-१२० । ५ २-२-८१ । ६ ३-१-४० । ७ ६-१-३१ । ८ ३-१-१४१ । ९ ४-३-१६ । १० ६-४-१६१ । ११ ५-२-५० । १२ ५-२-५२ । १३ ५-२-७१ ।

अन्यत्रेति–यतः " कर्मणि कृतः " इत्यनेन द्वयोरपि कर्मणोः षष्ठी प्राप्ता पक्षेऽनेन निषिध्यते । अजाया नेतासुघ्नमिति, एकत्रेति सामान्येन निर्देशात् प्रधानाप्रधानकर्मणोरविशेषेण ग्रहणमित्युभयत्रैवोदाहरति । ननु कर्मणीत्यधिकृतत्वादेकशब्दस्य च सद्वितीयव्यपेक्षत्वादेकत्रेत्युक्तेऽपि द्वयोः कर्मणोरेकतरस्मिन्निति गम्यत एव किं द्वयोरित्यनेन ? नैवम्, एवं सति ' प्रधानाप्रधानसन्निधौ प्रधाने कार्यसंप्रत्यय ' इति न्यायात् प्रधान एव कर्मणि स्यात् । यद्वा गौणादित्यधिकारात् कर्मापेक्षयाऽपि गौणकर्मण्येव स्यादिति द्वयोरपि प्रधानाप्रधानकर्मणोः पर्यायेण षष्ठीविकल्पार्थं द्वयोरित्युपादानमित्यदोषः ।

' कर्त्तरि ' । २ । २ । ८६ ॥ आसितुं पर्यायः, " पर्यायाo " इति णकः, आसिका । आसनं, आमना " णिवेत्ति० " इत्यनः ।

' द्विहेत्वोरकृण्णकस्य वा ' । २ । २ । ८७ ॥ नित्यं प्राप्ते इति–" कर्त्तरि " इत्यनेन । खलिवदमिति–खल संचये च खलतीति " भृमृतृ० " इति बहुवचनादुः । संयुक्तन्वे स्तोकशब्दैर्यद्वयोऽर्थो अस्यामिति, " कृहृ० " इत्यणिः । अगोपालकेनेति–पालयतीति णकः, गवां पालकः " ऐकेन क्रीडाजीवे " समासः । अन्तर्धौ येनाऽदर्शनमिच्छतीति–पञ्चमीविधायकं पाणिनिसूत्रमिदम् । अस्य चाऽयमर्थः–अन्तर्धौ अन्तर्धिविषये सति चाऽऽत्मनः कर्मतापन्नस्य येनोपाध्यायादिना कर्तृभूतेन यददर्शनं तदिच्छतीत्यर्थः । भिन्नकृतोरिति–ननु पाक इत्यत्राऽपि " भावाकर्त्रोर्घञ् " प्रादुर्भाव इत्यत्राऽपि स एव तत्कथं भिन्नकृतोरित्युच्यते ? सत्यम्, धातुभेदात्तस्याऽपि भेद इत्यदोषः । भेदिका चैत्रस्य चैत्रस्य काष्ठानामिति–भेदयितुं पर्याय इत्येव कार्यं, भावे तु " णिवेत्ति० " इत्यनेनाऽनप्रत्यय एव स्यात् ।

' कृत्यस्य वा ' । २ । २ । ८८ ॥ गेयो माणवको गाथानामिति–अत्र व्याप्त्येर्गाथानामित्यत्र कर्मणि माकत्वं, माणवकात्तु अगौणत्वाद् प्राप्तिरेव नाऽस्ति ।

' नोभयोर्हेतोः ' । २ । २ । ८९ ॥ ननु द्विकर्मकेषु धातुषु तावदयं प्रतिषेधस्तत्रैवोभयप्राप्तिसम्भवात् । तत्र प्रधानकर्मणः कृत्येनैवाभिहितत्वात् षष्ठ्यविषयत्वात् ' प्रधानाप्रधानसन्निधौ प्रधान एव सम्प्रत्यय ' इति न्यायात् तत्पादिवद् अप्रधानाद्व्यप्रसङ्गात् कर्त्रर्येव प्रतिषेधो न्याय्य इत्युभयग्रहणमतिरिच्यते, नैवम्; द्वितीया बाधिका हि कृत्प्रयोगे षष्ठी विधीयते । द्वितीया चाऽप्रधानात्पथा भवति तथाऽत्र षष्ठ्यपि

१ २-२-८३ । २ ३-१-१२० । ३ ५-३-१११ । ४ २-२-८६ । ५ उणा० ४३। ६ उणा० ६१४ । ७ १-२-४१ ।

भविष्यति । उपस्थानीयः पुत्रः पितुः–उपतिष्ठते "अवचनीयादयः" इति कर्तर्यनीयः, अत्र पितुः शब्दात् कृत्यस्य वेति कर्तरि षष्ठी, द्वितीये तु उपस्थीयते भैत्र्यादेवार्चेति आत्मने इति कर्मणि तव्यानीयौ "कर्मणि कृतः" इति पुत्रात् षष्ठी ।

'तृन्नुदन्ताव्ययक्वस्वानातृशतृङ्णिकच्खलर्थस्य' । २ । २ । ९० ॥ "कर्मणि कृतः", "कर्तरि" इति च प्राप्तयाः षष्ठ्या अपवादः । पायं पायं–"रूपम् चाऽभीक्ष्ण्ये", "भृश०" इति द्वित्वं च । भोक्तुं व्रजतीति–अत्र हेतुहेतुमद्भावे तृतीया, "तुमोऽर्थे०" इत्यनेन चतुर्थी वा । सम्बन्धविवक्षायां षष्ठी वा । आहरिष्यतीति "क्रियायां०" इति णकचि आहारकः ।

'क्तयोरसदाधारे' । २ । २ । ९१ ॥ ननु सत्यात्वर्थस्तत्र धातुरेव वर्तते कृत्यप्रत्ययस्तु "कर्तरि" इत्यादिना कारके भावे च विधीयते । तत्र सति प्रत्यय-विधिरेव नाऽस्ति कथं प्रतिषेधः ? सतोऽन्यस्मिन्नर्थ इति, नैष दोषः, सदर्थसहचारी प्रत्ययोऽपि सन्निरुच्यते । यद्वा धात्वर्थोऽपि सन्निति प्रत्ययत एव विज्ञायते । नहि धातुतः क्रियालक्षणो धात्वर्थो भूतो भवन् भविष्यन्निति वा ज्ञातुं शक्यः । धातुर्हि क्रियामात्रमाह न स्वस्य विशेषम् । स तु प्रत्ययादेव प्रतीयत इति कर्मादिकारकस्यचिरपि प्रत्ययः सतीति विज्ञायते । कथमिति–शीलितो मैत्रेणेत्यादावपि "ज्ञानेच्छा०" इति क्तो वर्तमानताप्रतीतिरप्यस्ति तत्कथं निषेध इत्याशङ्कार्थः । भूतेऽयं क्त इति–ननु भूते क्तः कथं वर्तमानताप्रतीतिः ? उच्यते–वर्तमानमध्ये भूतो भविष्यंश्च कालोऽस्ति, अतो भूते क्तः । यथा कटं करोतीत्यत्र कटस्य येऽवयवा निष्पन्नास्तदपेक्षयाऽतीतत्वं ये च निष्पद्यमानास्तदपेक्षया वर्तमानत्वं ये च निष्पत्स्यन्ते तदपेक्षया भविष्यत्त्वम् । अहेः सुप्तमिति–सदाधारादन्यत्र चातुःशब्दं भवति, यदा कर्तरि क्तस्तदा इममहिः सुप्तो देशं यदा कर्मणि तदाऽयमहिना सुप्तो देशः । भावे तु "धा क्रीये" इति वा षष्ठ्यामहेः सुप्तमहिना सुप्तमिति । अकमेवाराणसीमिति–वरणा चाऽसिश्च वरणासी नद्यौ ते विद्येतेऽस्याः "अदूराद्भिर्भ्योऽम्" । पृषोदरादित्वाद् ह्रस्वदीर्घव्यत्ययेऽन्नन्तत्वाद् ङ्याम् । यद्वा वराण इति वीरणाख्या वराणास्तृणविशेषाः सन्त्यस्यां "तृणादेः सल्," "लिन्मन्यणि०" इति स्त्रीत्वे वराणसाया अदूरभवा "निवासादूर०" इत्यण् ।

'एष्यदृणेनः' । २ । २ । ९४ ॥ शतं दायी–शतं धारयन् ददाति । "णिन् चाऽऽवश्यक०" इति णिन् करोमीति हरसीति पूर्ववद् णिन् ।

---

१ २-२-८३ । २ २-२-८६ । ३ ५-४-४८ । ४ ७-४-७३ । ५ २-२-६१ । ६ ५-३-१३ । ७ ५-३-१३ । ८ ३-२-१३ । ९ ६-२-८७ । १० ६-३-८३ । ११ ६-२-६६ । १२ ५-४-३६ ।

'सप्तम्यधिकरणे' । २ । २ । ९५ ॥ अत्र सत्यर्थ वैयर्थिके वा सप्तमी।

'नवा सुजर्थैः काले' । २ । २ । ९६ ॥ अधिकरणे नित्यं सप्तमी सिद्धैव पक्षे षष्ठीविधानार्थम् । बहुव्रीह्याश्रयणं किमिति ? अन्यथा षष्ठीतत्पुरुषाश्रयेण सुजर्थे काल इति कृते यदाऽर्थादिनाऽह्नि भुङ्क्त इति द्विस्त्रिर्वेति प्रतीयते, तदापि स्यात्तदा मा भूदित्येवमर्थं तदाश्रयणमित्यर्थः । द्विः कांस्यपात्र्यामिति–कंसायेदं कंसीयं "परिणामिनि तदर्थे" इतीयस्ततः कंसीयस्य विकारः "कंसीयाञ्ञ्यः" इति ञ्यो यलुक् च । द्विरह्वा भुङ्क्त इति–अहरधिकरणमपि अत्राऽशने करणविवक्षामनुभवतीति तृतीयैव भवति । नियमार्थं तु वचनमिति–सुजर्थैरेव योगे काले सप्तमी वा भवति। सुजर्थयोगे काल एव वा सप्तमी भवतीत्युभयथाऽपि नियमात् प्रत्युदाहरणेषु आधारसप्तम्येव न षष्ठी ।

'कुशलायुक्ते नासेवायाम्' । २ । २ । ९७ ॥ आयुक्त इति–युजंपी आयुक्ते युजि आयुज्यते स्म, कर्तरि क्तः ।

'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः' । २ । २ । ९८ ॥ सप्तम्यर्थवचनमिति अयमर्थः स्वाम्यादीनां गवादिसम्बन्धित्वं तन्निवृत्तौ हि तेषां स्वाम्यादिभावाभावस्तत्राऽस्त्येव षष्ठी, सप्तमी तु क्रियाप्रतीत्यभावान्नाऽस्तीति पक्षे सप्तमीप्रापणार्थं वचनमिति ।

'व्याप्ये क्तेनः' । २ । २ । ९९ ॥ वेति निवृत्तमिति–व्याप्योपादानाचेन चाऽधिकारभेदः । पृथग्योगादिति वा । प्रत्ययस्याऽर्थः प्रत्ययार्थः । प्रत्ययार्थः कर्ता यस्य धात्वर्थस्य अध्ययनलक्षणस्य स तथा, तेन व्याप्यमाने व्याकरण इति ।

'तद्युक्ते हेतौ' । २ । २ । १०० ॥ तेन व्याप्येन युज्यते स्म । यथाऽत्र नानादेशजविनेयानुग्रहार्थं युक्तं, हेतुर्निमित्तं कारणमिति–बहुतरपर्यायमिति कथनम् । हेतुशब्दोपादानाच्चेह विशिष्टमेव निमित्तमभिप्रेतं न निमित्तमात्रमन्यथा तद्युक्ते निमित्ते इति कृते दात्रेण धान्यं लुनातीति निमित्तमात्रवाचिनो दात्रादपि स्यात्सप्तमी । न चोपपदविभक्तेः कारकविभक्तिर्बलीयसीति न भविष्यतीति वाच्यम्, यतो यथा कर्तृकरणयोस्तृतीया सिद्धेति तृतीयायाः कारकविभक्तित्वं तथाऽत्र सप्तम्या अपि व्याप्येन युक्त इति कारकश्रुत्या कारकविभक्तित्वम् । या तूपपदविभक्तिर्यत्र कारकगन्धोऽपि नाऽस्ति यथा शक्तार्थवषडादिभिर्योगे चतुर्थीति । तस्माद्धेतुशब्दाभिधेयं विशिष्टमेव निमित्तं, यदर्थः क्रियारम्भो तदेवाऽत्र निमित्तमभिप्रेतं न निमित्तमात्रं

१ ७-१-४४ । २ ६-२-४१ ।

इत्यादिवत्। यदा तु सप्तम्यर्थे एवाऽधिशब्दस्तदाऽत्राऽप्यव्ययीभाव एवाऽव्ययवन्ति प्रयोत इति । नन्वत्र क्रमेण परस्परमाधाराधेयभावविवक्षायां पर्यायेण सप्तम्यधिकरण एव सप्तमी भविष्यतीति किमनेनेति ? सत्यम्। सम्बन्धविवक्षया षष्ठ्यपि स्यादित्याह–षष्ठ्यपवादो योग इति ।

'उपेनाधिकिनि' । २ । २ । १०५ ॥ अत्र यदधिकं तदधिकिन्यारूढमित्याधारविवक्षायां सप्तमी सिद्धैव परं पूर्ववद्विभक्त्यन्तरबाधनार्थम् । अधिको निष्कस्येति–साधुर्भृत्यो राज्ञ इतिवन्निष्कशब्दस्याऽधिकशब्देन सह सम्बन्धाभावात् " अधिकेन भूयसस्ते " इत्यनेन निष्कशब्दान्न पञ्चमी ।

'यद्भावो भावलक्षणम्' । २ । २ । १०६ ॥ कलायो मात्रेष्विति–कलायो मालवकप्रसिद्धोऽयमधान्यविशेषो मानमेषां स्यात्, "मोऽवट्" इत्यनेन मायट् । यत्रेति–अयमर्थो यत्र ऋद्धानां दरिद्राणां च भुजिक्रियामासनक्रियां च प्रति यथासंख्यं कारकत्वं कोऽर्थस्तां प्रति कर्तृत्वं, तद्विपर्ययोऽकारकत्वं च तत्राऽपि भावो भावस्य लक्षणमित्यनेनैव सप्तमी सिद्धेति यदन्यैः क्रियार्हाणां कारकत्वं तद्विपर्ययो वा यत्र क्रियानर्हाणामकारकत्वं, कारकत्वं चेति सप्तमीविधायकं सूत्रद्वयं कृतं तन्नाऽऽरम्भणीयम् । यस्य भावो भावस्य लक्षणं ततो भाववतः सप्तमीष्यते यद्ग्रहणमन्तरेण चैतन्न लभ्यते इत्याह–यद्ग्रहणं प्रकृत्यर्थमिति–यो जटाभिरुपलक्षितस्तस्य भोजनमित्यत्र न भावो भावस्य लक्षणमिति तु द्रष्टव्यम्। तृतीयापवाद इति–इत्थम्भूतलक्षणेऽर्थे ।

'गते गम्येऽध्वनोऽन्तेनैकार्थ्यं वा' । २ । २ । १०७ ॥ कुताभिदधर्गे–वीधुमत इत्यादिलक्षणाद्विवक्षितस्येयत्तापरिच्छेदस्य योऽध्वनोऽवसानं साङ्काश्यादन्तः । यद्भाव इति यस्याऽध्वनश्चतुर्योजनरूपस्य भावेन गमनरूपेणाऽपरो भावः साङ्काश्यगमनरूपो लक्ष्यते तस्येत्यर्थः । एकोऽर्थो द्रव्यमनेकभेदोऽधिष्ठानं यस्य स एकार्थस्तस्य भाव ऐकार्थ्यम् । तद्विभक्तिरिति–अन्यथैकविभक्तिमन्तरेण सामानाधिकरण्यं न घटेत । गवामीः श्रीस्तां दधाति " वैकाद्ध्यि० " इति किदुः । सोऽत्राऽस्ति मतुः । अव्युत्पन्नो वा गवीधुमच्छब्दः । गव्यूतिरत्राऽस्ति विषयतयाऽव्ययवितया वा, " अभ्रादिभ्यः " अः, गव्यूतं क्रोशमेकम् । नन्वन्तेनेति–चतुर्षु योजनेषु यस्माद्धदयं तत्रत्वारि योजनानि ।

'षष्ठी वाऽनादरे' । २ । २ । १०८ ॥ सप्तम्यामनादरप्रतीतिरर्थप्रकरणादेरित्यर्थभेदाद्य बाध्यबाधकभावोऽस्तीति किं ? षष्ठ्ये सप्तम्यर्थेन न वा शब्देनेति ? उच्यते–यथाऽनादरादन्यत्र साम्प्रतः सप्तम्यस्ति । एवं " शेषे " इत्यनेन षष्ठ्यपि,

१ २-२-१११ । २ ७-१-१४५ । ३ उणा० ७११ । ४ ७-२-४६ । ५ २-२-८१ ।

तथोभयथाऽपि प्रव्रजन् रुदताऽपि लोकेन निवर्त्यमानस्तद्रोदनमनादृत्य प्राव्राजीदित्य-नादरः प्रकरणादेः प्रतीयत इति समानेऽर्थे षष्ठी सप्तमी चाविधिनेति पक्षे तदर्थं वा वचनम् ।

'सप्तमी चाविभागे निर्धारणे' । २ । २ । १०९ ॥ क्षत्राण्यायते "स्थापा०" इति कः पृषोदरादित्वादल्लोपे क्षत्रं तस्याऽपत्यं "क्षत्राद्घः" क्षत्रियः पुरुषाणामि-त्यादिषु क्षत्रियत्वशालित्वं जात्या कृष्णत्वगुणेन, धावनक्रियाऽऽदिशब्दाद् युधिष्ठिर-प्रभृतिसंज्ञया च निर्धारणम् । ननु निर्धार्यमाणस्याऽवयवस्य समुदायाभ्यन्तरत्वा-त्तत्र समुदायस्याऽधिकरणविवक्षायां वृक्षे शाखेतिवत्सप्तम्याः सिद्धत्वात्, सम्बन्ध-विवक्षायां त्ववयवस्य वृक्षस्य शाखेतिवत् षष्ठ्या अपि सिद्धत्वात्किमनेनेति ? नैवम् विभागे प्रतिषेधार्थत्वादस्य, ननु सर्वत्रैव निर्धारणस्य विभागरूपत्वेनाऽविभागपूर्व-कत्वादविभागग्रहणस्य निरर्थकत्वादविभागग्रहणसामर्थ्यादवधारणमाश्रीयते । अवि-भागो यत्र शब्दत एव प्रतीयते तत्र निर्धारणे सप्तमीषष्ठ्याविति । यथा क्षत्रियः पुरुषाणां पुरुषेष्वित्यत्र निर्धार्यमाणस्य क्षत्रियस्य पुरुषशब्दात्पुरुषत्वेनाऽविभाग-प्रतीतिः । तेन माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यत्र न भवति । न ह्यत्र केनचि-त्प्रकारेण माथुराणां पाटलिपुत्रकेष्वविभागः शब्दतः प्रतीयते । नहि पाटलिपुत्रका माथुरा नाऽप्याढ्यतरा इति वाक्याद्भेद एव प्रतीयत इत्याह-शब्दाद्गम्यमान इति-गवां कृष्णेत्यादौ विभज्यमाना गौर्गोत्वेन समुदायादविभक्ता कार्ष्ण्येन तु विभक्ता तस्माद्विभज्यमानस्यैकदेशस्य विभागाश्रयस्य च समुदायस्य यत्र विभागाविभागौ स एवाऽनयोर्विषयः । यत्र तु तयोर्विभाग एव न कथञ्चिदैक्यं तत्र पञ्चम्येव भवति अत एवाऽऽह-पञ्चमीबाधनार्थमिति । अयमर्थनिर्धारणस्य विभागरूपत्वादयस्य हि यतो विभागस्तस्य तदपेक्षयाऽवधिरूपत्वादपादानत्वात् "पञ्चम्यपादाने" इति पञ्चम्यां प्राप्तायां यत्राऽविभागोऽपि तत्र तदपवादो योग इत्यर्थः ।

'क्रियामध्येऽध्वकाले पञ्चमी च' । २ । २ । ११० ॥ इहस्थोऽयमिषि-नन्विष्वास इति धनुरुच्यते । यथाऽङ्गराजो महेष्वास इति । महानिष्वासो यस्येति व्यु-त्पत्तेः । धनुश्च व्यधने करणं कर्ता तु मैत्रादिस्तत्कथमुक्तमिष्वासो विध्यतीति ? उच्यते-इष्वास इति क्रियाशब्दोऽयमिति । यः कश्चिदिषूनस्यति क्षिपति स मैत्रादिरप्युच्यते, यद्वा रूढिशब्दत्वेऽपि करणस्य स्वातन्त्र्यविवक्षायामिष्वासो विध्यतीत्युपपद्यत एव । यथा स्थाली करणस्य कर्तृत्वविवक्षायां स्थाली पचतीत्युच्यते । अद्य भुक्त्वेति-नन्विहस्थोऽयमिष्वास इत्यादि क्रियाभेदात् युक्तमिदमुदाहरणम् । इदं त्वयुक्तमिद-मुदाहरणम् । इदं त्वयुक्तमऽद्य भुक्त्वा मुनिर्द्व्यहाद्भोक्तेति भुजिक्रियाया एकत्वात् ?

१ ५-१-१४२ । २ ६-१-९३ । ३ २-२-६९ ।

सत्यम् । भुजिक्रियाया एकस्या अपि कालभेदाद्भेदस्य सिद्धत्वादाधारो हि तस्या भिद्यते । अधिकरण एव सप्तमीति—क्रियामध्यव्यवस्थितस्याऽध्वनोऽधिकरणत्वात् सप्तमी सिद्धा क्रोशैकदेशस्याऽधिकरणत्वात् क्रोशेऽप्यधिकरणत्वस्य वक्तुं शक्यत्वात्, द्व्यहे पूर्ण इत्यत्र तु पूर्णद्व्यहस्य यदुपश्लिष्टमहस्तत्र भोक्तेत्यर्थात्रमाभादौपश्लेषिका सप्तमी सिद्धा । पञ्चमी त्वध्वनोऽपादानत्वात्, क्रोशान्निर्गच्छद्भिः शरैर्लक्ष्यं विध्यतीत्यर्थावगमात् । कालात्तु " गम्यमानापि० " इति द्व्यहमतिक्रम्य भोक्तेत्यर्थप्रतीतेः किमर्थोऽयं योग इत्याक्षेपार्थः । यथा च शरनिर्गमनस्य धनुरपादानं तथा क्रोशोऽपि तस्मादपि हि ते निर्गच्छन्ति । यद्वा क्रोशस्थं धनुरपि क्रोशेनाऽभिधीयते उपचाराद् मञ्चाः क्रोशन्तीतिवत् ।

अस्यैवेति—अपादानस्याऽऽधारस्य वेत्यर्थः । फलभूतेतिक्रियाकारकसम्बन्धो हि कर्तुं करोतीत्यादावप्यस्ति, तद्व्यवच्छित्त्यै शेषसम्बन्धलक्षणा फलभूता कार्यभूतोत्तराऽवस्था इत्युक्तम् । षष्ठी मा भूदिति वचनमिति—अयमर्थो यदा भोजनवधणादौ कालाध्वनोः क्रियाकारकजन्यं शेषसम्बन्धित्वमेव केवलं विवक्ष्यते न त्वपादानाधिकरणत्वे तदा ताभ्यां षष्ठ्येव स्यादिति सूत्रारम्भः । किञ्च यदा द्व्यहक्रोशशब्दौ द्व्यहक्रोशावेव न तदेकदेशविषयौ तदा नाऽपायो नाऽप्याधारतेति षष्ठी प्राप्नोति, किञ्च क्रोशं वाहयित्वा विध्यति, द्व्यहं वाहयित्वा भोक्तेति वा प्रतीतेर्द्वितीया प्राप्नोति तद्बाधनार्थोऽयं योग आरभ्यते । वृत्तौ तु षष्ठी मा भूदिति षष्ठीग्रहणमुपलक्षणार्थम्, तेन द्वितीयाऽपि मा भूदित्यर्थः सिद्धो भवति ।

' अधिकेन भूयसस्ते ' । २ । २ । १११ ॥ भूयसिस्त्वुपादानादधिकशब्देनाऽल्पीयानेवोच्यत इत्याह—सामर्थ्यादिति—अत्राऽधिकाधिकिसम्बन्धस्य विद्यमानत्वात्स्वामिशब्दात् " शेषे " इत्यनेन षष्ठी प्राप्नोति तथाऽधिकशब्दस्य कर्तृसाधनाध्यारूढार्थत्वात् कर्मणीति द्वितीया च । अतस्तयोर्बाधिके सप्तमीपञ्चम्यावनेन विधीयेते ।

' तृतीयाल्पीयसः ' । २ । २ । ११२ ॥ सामर्थ्यादिति अल्पीयस इत्युपादानात्कर्मसाधनो भूयोऽर्थोऽधिकशब्दः प्रतिपत्तव्य इति । कर्तरि तृतीया सिद्धैव षष्ठीबाधनार्थं तु वचनम् ।

' प्राते द्वितीया च ' । २ । २ । ११४ ॥ न ह्यहं विक्रियत इति—विपयादिभिः फर्तृभिरित्यर्थः । विक्रियत इति कर्मण्ययं प्रयोगः । कर्मकर्तरि [3] " भूषार्थ० " इति किरादित्वात् क्यप्रतिषेधः स्यात् ।

१ २-२-७४ । २ २-२-८१ । ३ ३-४-५३ ।

' विना ते तृतीया च ' । २ । २ । ११५ ॥ विनेति तृतीयान्तमव्ययम् । आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम् ।

स्थानानामभिघातश्च, न विना शब्दभावनाम् " ॥ १ ॥

' तुल्यार्थैस्तृतीयाषष्ठ्यौ ' । २ । २ । ११६ ॥ न तुल्यार्था इति–तुल्यादयो हि धर्मिवाचकाः, तुला उपमादयस्तु तुल्यत्वादिधर्मवचना इति न तुल्यार्थाः । गौणाधिकाराच्चेति–प्रधानाद्गोशब्दान्न भवतीत्यर्थः । तुल्यार्थताऽपि नाऽस्तीति चकारेण परिहारान्तरं समुच्चीयत इति शेषः । नन्वनन्तरात्पूर्वसूत्राच्चतृतीयाऽनुवर्तते ततस्तुल्यार्थैरिति तद्विकल्पे कृते " शेषे " इत्यनेन शेषलक्षणा षष्ठी सिद्धैव किमर्थं तद्विधानमित्याह–तृतीयेत्यादि । गवां तुल्यः स्वामीति–गवां स्वामी गवां तुल्य इत्यर्थः । यद्यस्मत्स्वामी गवां तुल्य इत्यर्थो विवक्ष्यते तदा गोशब्दस्य स्वामिशब्देनाऽयोगात्सप्तमीप्राप्तिरेव नाऽस्ति ।

' द्वितीया षष्ठ्यावेनेनानञ्चेः ' । २ । २ । ११७ ॥ पूर्वेणेति–पूर्वस्यामदूरवर्तिन्यां दिशि " अदूरे एनः " ।

' हेत्वर्थैस्तृतीयाद्याः ' । २ । २ । ११८ ॥ प्रत्यासत्तेरिति–हेत्वर्थैस्तु व्यधिकरणाद्धेतुसम्बन्धे षष्ठ्येवाऽस्ति । न तत्र तृतीयाद्या इति सामर्थ्याद्धेत्वर्थैः समानाधिकरणाद्धेतोरपि तृतीयाद्या भवन्तीति । न तूत्तरसूत्रेण सर्वा विभक्तय इति सर्वविभक्त्यन्तर्गतत्वात्तृतीयाद्या अपि सिद्धाः किमर्थमिदमित्याह ? असत्त्वाद्यर्थमिति–हेतोस्तृतीयायां, " ऋणाद्धेतोः " " गुणादस्त्रियां० " च पञ्चम्यां प्राप्तायामयं विधिरारभ्यत इति ।

' सर्वादेः सर्वाः ' । २ । २ । ११९ ॥ प्रियाः सर्वे यस्येति बहुव्रीहौ हेत्वर्थयोगेऽपि न सर्वा विभक्तयः,अन्यपदार्थप्रधानत्वेन सर्वादेर्गौणत्वात् । गौणे मुख्ये च मुख्ये कार्यसंप्रत्ययः । कर्मधारये परमसर्वं हेतुं वसतीत्यादि तु भवति । ' ग्रहणवता नाम्ने 'ति नोपतिष्ठतेऽत्र ।

' असत्त्वारादर्थाट्टाङसिङ्यम् ' । २ । २ । १२० ॥ असत्त्व आरादर्थः, न विद्यते सत्त्वं यस्य स चाऽसौ आरादर्थश्च वा । गौणादिति निवृत्तम्–विभक्तिसम्बन्धत्वात्तन्निवृत्तावित्यर्थः । अत्र हि यदीनि वचनान्युपात्तानि, न तृतीयाद्या विभक्तयः । दूरेण ग्रामस्य ग्रामाद्वा–इदं तदिति सर्वनामप्रत्यवमर्शयोग्यार्थाभिधायकत्वेऽप्येतेषां धर्ममात्रेण प्रयोगादसत्त्वरूपार्थाभिधायकत्वं न विरुध्यते । तथाऽत्र ग्रामशब्दाद् " आरादर्थैः " इति वा पञ्चम्यां पक्षे " शेषे " इति षष्ठी । अन्तिकाय पथे

१ २-१-८१ । २ ७-२-१२२ । ३ २-२-७६ । ४ २-२-७७ । ५ २-२-७८ ।

इति-अत्रोपपदविभक्तेः कारकविभक्तिरिति पञ्चमीं बाधित्वा चतुर्थी। कथमिति-आरादर्थत्वाभावात्कथमेभ्यो द्वितीयाद्या इत्याशङ्कार्थः।

'**जात्याख्यायां नवैकोऽसङ्ख्यो बहुवत्**'।२।२।१२१॥ वैषयिकेऽधिकरणे सप्तमी, जात्यर्थस्येति-न जातिशब्दस्य तथा सति सम्पन्ना यवा इति यवशब्दादेव जातिशब्दाद्बहुवचनं स्यान्न सम्पन्नशब्दात्तद्विशेषणभूतादिति। जात्यर्थस्य तु बहुवद्भावे सम्पन्नादिविशेषणान्यपि सामानाधिकरण्याद्यवादिशब्दोपात्ते जात्यर्थे वर्तन्त इति तेभ्योऽपि बहुत्वाश्रयं बहुवचनमुपपन्नमिति। चैत्रो मैत्र इति-नेह जातिरभिधेया यदृच्छाशब्दत्वादनयोः जातिर्हि सामान्यमुच्यते। यच्छबलशाबलेयधवलधावलेयाद्यनेकव्यक्तिभेदेषु गौर्गौरित्याद्यनुवृत्तप्रत्ययकारणमिति। यदि च बालकुमारादिभेदेऽनुवर्तमानमभिन्नं रूपं जातिरुच्यते तथा सति नाऽजातिः। कश्चिच्छब्दार्थोऽस्तीति जातिग्रहणमनर्थकं स्यात्तस्मात् सादृश्यसामान्यमिह जातिर्न स्वरूपसामान्यमिति। भवत्ययं जातिशब्द इति-गोत्रं च चरणैः सहेति लक्षणेन परमाण्वाग्रहणात्प्राधान्येन जातावभिधेयायां भवति। इह तु तद्विशिष्टा प्रतिकृतिराख्यायत इति।

'**अविशेषणे द्वौ चास्मदः**'।२।२।१२२॥ अनुकरणत्वादस्मच्छब्दकार्या प्रवृत्तिः। अविशेषण इति-अत्र प्रतिषेधप्रधानः प्रसज्यो नञ्। यद्यत्र पर्युदासः स्याद्विशेषणादन्यस्मिन्निति तदा विशेष्येण विधेनाऽपि प्रतिषेधो विशेषणादन्यस्मिंस्तु प्रयुज्यमाने विधिः। कोऽर्थः अस्मदर्थस्य विशेषणे ततोऽन्यस्मिन् प्रयुज्यमाने स्यादित्यर्थः। ततश्चाऽहं मैत्रो ब्रवीमीत्यत्राऽपि मित्रन्तस्य विशेष्यस्य भावान्मैत्र इति विशेषणे सत्यपि स्यादित्याह-न चैत्रस्येति। विधेयत्वेनेति-अज्ञातज्ञापनीयत्वेनेत्यर्थः। एकानेकस्वभावस्येति-अयमर्थ एकोऽप्यात्मा यथैकत्वेनाऽनुभूयते तथा द्रष्टाश्रोतामन्तेत्यादिनाऽनेकत्वेनाऽपि। न ह्येकान्तेनैकत्वेनाऽनेकत्वेन चेतरविनिर्मुक्तेन प्रतिपत्तिरस्ति। तत्र यथैकत्वेन द्वित्वेन च तस्मिन् विवक्षिते एकवचनं द्विवचनं च तथा बहुत्वविवक्षायां बहुवचनं सिद्धम्।

'**फल्गुनीप्रोष्ठपदफल्गुनीप्रोष्ठपदस्य भे**'[1]।२।२।१२३॥ फल्गुनीप्रोष्ठपदे इति-प्रवृद्ध ओष्ठो यस्य प्रोष्ठो गौस्तस्येव पादौ यस्या ययोर्वा "सुप्रात०" इति निपात्यते।

'**गुरावेकश्च**'।२।२।१२४॥ कारुणिक इति-करुणा प्रयोजनमस्य करुणया वा चरति। अयं भवान् इह भवान् "भवत्वायुष्मद्दीर्घायुः०"[2] इमे भवन्त इह भवन्तः। पञ्चालानां देशोऽप्युपचारात्पञ्चालाः। गोदौ ह्रदौ तत्समीपग्रामोऽपि

---

१ ७-३-१२१। २ ७-२-५१।

विरुध्यते तदेवं क्रमाक्रमभाव्यनेकभेदात्मके वस्तुनि सर्वमुपपद्यते । तत्राऽप इति नैकस्यां व्यक्तौ प्रवर्ततेऽपि तु बहुव्यक्तिविषय एव । एवं दारादयोऽपि पुंलिङ्गाः । यथा द्वौ त्रय इति भेदविषया एव । नैकैकविषया, एकविषयत्वेऽपि गुणपर्यायाश्रयत्वभेदोपादानाद्वस्तुसामर्थ्याद् बहुत्वोपपत्तिः । एवं पञ्चाला इति वस्तुशक्तिस्वाभाव्यादवयवद्वारेण प्रवर्तते । जनपद इति समुदायद्वारेण । एवं गोदौ ग्राम इत्यादावप्येकानेकसंख्योपपत्तिः । हरीतक्यः फलानीति लिङ्गभेदश्च सर्वलिङ्गत्वाद्वस्तुनः । पञ्चालमधुरे इति पञ्चालादीनां बहुत्वविषयाणां समासे उत्तरपदादन्यत्र समुदायाभिधानं न त्ववयवाभिधानमिति बहुत्वाभावः । नियतविषयाश्च शब्दशक्तयो भवन्ति । यथा राज्ञः पुरुष इति वाक्ये राजशब्दो विशेषणादियोगिनमर्थमाचष्टे वृत्तौ तु तद्विलक्षणं राजपुरुष इति । चञ्चाभिरूपो मनुष्य इति-सादृश्यान्मनुष्यवृत्तेश्च तद्रूपं यत्र विशेषणयोगि । पञ्चालादिशब्दानां च क्षत्रियाद्यर्थवृत्तीनामपि सोऽयमित्यभिसम्बन्धादुपचाराज्जनपदाद्यर्थेऽपि वृत्तिरित्युक्तं, मुख्योपचरितार्थानुपातिनीत्यादि-अत्र च रूढिः प्रमाणम् । यतो वृद्धव्यवहाराच्छब्दार्थव्युत्पत्तिरिति उच्यते-रूढित्व इति रूढिः शिष्टव्यवहारे प्रसिद्धिः, तत्तल्लिङ्गसंख्योपादानव्यवस्थेति । सा सा येदानीं प्रदर्शितेति ।

॥ इति अवचूर्णिकायां द्वितीयस्याऽध्यायस्य द्वितीय पादः समाप्तः ॥

' नमस्पुरसोगतेः कखपफि रः सः '। २ । ३ । १ ॥ नमस्कृत्येति-अनमो नमःकरणं पूर्वं " साक्षादादिः० " इति गतिसंज्ञायां " गतिकन्य० " इति सः । नमः कृत्वेति अत्र नमः शब्दान्तरं न त्वव्ययमिति अमः । " अनतो लुप् " पुर इति-पूंरु पिपर्तीति भ्राजादिनिपातनात् क्विपि दीर्घत्वे च " ओष्ठ्यादुर् " इत्युरि पूः ततः शस् ।

' पुंसः '। २ । ३ । ३ ॥ ननु " पुंसोऽशिट्यघोषे० " इत्यत्र रमपहाय सत्वमेव विधीयतां किमनेनेति ? सत्यम्, एतद्विना पुंश्चरः पुंश्छिन्न इत्यादयो न सिध्यन्तीति आरभ्यते । न च वाच्यं " सोरुः " इति रुत्वे तस्य धुटस्तृपत्वादी च कृते सन्तीति, विधानसामर्थ्यात् । पुंस्काम्यति-अत्र " रोः काम्ये " इति निर्माणि सेत्स्यन्तीति, विधानसामर्थ्यात् । पुंस्कः पुंस्पाश इत्यत्र तु कृतमपि षत्वं परत्वात् " नामिनस्तयोः षः " इति षत्वं न । पुंस्कः पुंस्पाश इत्यत्र तु कृतमपि षत्वं परस्मिन् " पुंस " इति सत्वे कर्तव्ये " षत्वमसद्० " इत्यनेनाऽसिद्धं, यतः रात्समपादे सत्वापेक्षया परमपि षत्वं णपमित्यत्र ज्ञातव्यमतः षत्वमर्वाचीनं मत्वं तु परविधिरिति ।

' शिरोऽधसः पदे समासैक्ये '। २ । ३ । ४ ॥ पदशब्दे पर इति-न च

१ ३-१-१४ । २ ३-१-४२ । ३ ३-२-६ । ४ ४-४-११७ । ५ १-३-१ । ६ १-१-७३ ।
७ १-१-७ । ८ २-१-८ । ९ २-१-६० ।

वाच्यं 'स्वरूपं शब्दस्ये'ति कृत्रिमाकृत्रिमयोरित्यनेन वा । "तदन्तं पदम्" इत्यादिसूत्रैः परिभाषितस्य ग्रहणं प्राप्नोतीति । समास इति वचनादुत्तरपदमन्तरेण च समासस्याऽसम्भवात्तस्य सामर्थ्यं लब्धत्वात् पदग्रहणानर्थक्यप्रसङ्गादिति त्रिपदम् स्यात्, अत्र "सप्तमी शौण्डैः" इति वा, षष्ठीतत्पुरुषो वा । अयः पदमयस्तनं पदमित्यत्र । "अन्यस्य मयूरादिभिः" इति नित्ये से प्राप्ते बाहुलकाद्वाक्यमपि । "कृते तृतीयासमासे" इतित्वस्समास इत्युक्तेऽपि तौ चेन्निमित्तनिमित्तिनावेकत्र समासे स्त इति लभ्यते, एकपदग्रहणं तु 'त्रिविधा सूत्राणां कृति'रिति न्यायप्रदर्शनार्थम् । यतः क्वाऽप्यार्थ्या वृत्त्या क्वापि शाब्द्या वृत्त्या निर्दिश्यत इति न कोऽपि दोषः ।

'अतः कृकमिकंसकुम्भकुशाकर्णीपात्रेष्वनव्ययस्य' । २ । ३ । ५ ॥ अयस्कार इत्ययसोऽयः करोतीत्यर्थकथनमिदं यतोऽयस् अस् कृ अण् इति समासः । ततोऽण्योगे कर्मनिमित्ता षष्ठी न भवति । "नैनाम्येकस्वरात्०" इत्यत्र ग्रन्थेऽस्मोऽलुक्समासविधानात् । पयस्काम इति-णिङो विकल्पेन विधानात्कमिर्भवति । वाक्यं तु णिङन्तस्यैव कार्यं यतोऽन्यविषये स विकल्पः । वृत्तिविषये तु नित्यमेव । अयस्कुशेति-अयोविकारस्याऽविवक्षितत्वात् "भाजगोण०" इति ङीन्न । अयः प्रधानं यस्याः सा अयःप्रधाना सा चाऽसौ कुशा चेति कर्मधारयः । अयस्कर्णीति-अय इव कर्णौ यस्या इति बहुव्रीहौ "नासिकोदर०" इति वैकल्पिको ङीः । समुदायस्य जातिवाचित्वे प्रतिपाद्ये "पाककर्ण०" इति नित्यः । अय इव कर्णोऽस्या इत्यपि कृते गौरादित्वात् ङीः । न त्वयस्कृतमित्यादौ कृञ्धातुरुत्तरपदं नाऽस्ति तत्कथं सकार इत्याह इह कृकम्योरिति । कथं पयस्कामेति कमेर्णिङि "शीलिकामि०" इति णे पयस्कामा णिङभावे तु कर्मणोऽणि पयस्कामीति प्राप्नोति । तत्कथं पयस्कामेत्याह-कमनमित्यादि, अयस्कुम्भीति गौरादित्वात् ङीः । शुनस्कर्ण इति शुनः कर्णाविव कर्णावस्य ।

'प्रत्यये' । २ । ३ । ६ ॥ अत इतीह नाऽऽश्रीयते तेन वा स्कल्पेत्यादि सिद्धम् । इह प्रत्ययेन समासासम्भवात् समास इति तत्सम्बद्धमेतस्य इति च नाऽनुवर्तते । प्रत्यय इति किमिति-अत्र प्रत्ययग्रहणाभावे 'रोः काम्ये' चेति सूत्रं तस्य चाऽयमर्थः । रोः स्थाने काम्ये चकारात् कखि पफि च सो भवति । तर्हि नियमः कथमिति ? उच्यते-कखपफमध्यपतितत्वात् काम्यग्रहणे लब्धे पुनः काम्यग्रहणं करोति तज्ज्ञापयति रोरेव काम्ये ।

---

१ १-१-२० । २ ३-१-८८ । ३ २-१-४८ । ४ १-२-८ । ५ ३-२-१ । ६ ३-४-३० । ७ ३-४-३१ । ८ ३-४-९५ । ९ ५-१-७३ ।

'रोः काम्ये'। २। ३। ७॥ नियमार्थमिति–विपरीतनियमस्तु वर्चस्केति-निर्देशात् प्रत्यये रोः काम्ये चेत्येकयोगाभावाद्वा न।

'नामिनस्तयोः षः'। २। ३। ८॥ अत्राऽनव्ययस्येति वर्तते यतः पूर्व-सूत्राभ्यां सकारे प्राप्तेऽयं ष इति। सार्पिष्क इति–"प्रेसये" इति सूत्रे पाशकल्पका इत्युपलक्षणत्वादिकणोऽपि ग्रहणम् यद्वा इकारे लुप्तेऽयमपि क इत्यनेनाऽत्राऽपि षत्वं सर्पिषा संस्कृतः "संस्कृते" इतीकण्। सप्तमी वाच्ये तु "संस्कृते भक्ष्ये" इत्यने-नाऽण् स्यात्। धानुष्क इति धनुः प्रहरणमस्येति "प्रहरणम्" इकण्।

'निर्दुर्बहिराविष्प्रादुश्चतुराम्'। २। ३। ९॥ चतुष्कण्टकमिति–अत्र बहु-व्रीहिः समाहारो वा। समाहारे तु पात्रादित्वात् स्त्रीत्वप्रतिषेधाद् ङीर्न भवति। कथ-मिति?–अयमाशयः निर्दुरोः षत्वमुच्यमानमन्यत्वात् कथमत्र, तथा ह्यत्र परत्वात् षकारात् पूर्वं "दूरादामन्त्र्यस्य०" इति प्लुतः स्यादिति वृद्धिश्चेति।

'सुचो वा'। २। ३। १०॥ सुच इति रेफस्य विशेषणं तेन चतुष्पचती-त्यत्राऽपि विकल्पः। न ह्यत्र सुचः स्थाने रेफः। "रोस्सः" इति सुचो लोपादतः सुजिति प्रकृतिविशेषणं, तत्र च तदन्तविज्ञानमित्याह–सुजन्तानामिति एवं। हि विधाय-माने सुचो लोपेऽपि स्थानिवद्भावेन सुजन्त एवाऽयं चतुःशब्द इति। न चैवं त्रिष्क-रोतीति त्रिशब्दरेफस्याऽपि सुजन्तसम्बन्धित्वात् कस्मान्न भवतीति वाच्यमनन्तरे कृतार्थत्वादिति।

'वेसुसोऽपेक्षायाम्'। २। ३। ११॥ प्रत्ययपोर्ग्रहणादिति–इह प्रत्यया-प्रत्यययोः लक्षणप्रतिपदोक्तयोः अर्थवद्ग्रहणेनाऽनर्थकस्येत्यनेन च इसुसोः प्रत्ययपो-रेव ग्रहणादिह न भवतीत्यर्थः। फेनायव इति–फेनमुद्वमति फनोष्मेति क्यङ्।

'समासेऽसमस्तस्य'। २। ३। १२॥ इदमेवेति–ननु परमसर्पिष्करोति परम-धनुष्करोतीति परमसर्पिःपरमधनुःशब्दयोरिसुसन्तत्वाभावान्ना भूत्षकारः उत्तरपदा-र्थप्रधानत्वात्समासस्य, सर्पिर्धनुःशब्दयोरिसुसन्तत्वात्तदाश्रयः षो भविष्यति किं तद-र्थेन ज्ञापकेन? न चैवं सति परमसर्पिःकुण्डमित्यत्राऽपि प्राप्नोति। सर्पिःशब्दस्य कुण्डेनाऽसमासात् किन्तु परमसर्पिःशब्दस्य? उच्यते, यद्यपि परमं सर्पिः परमसर्पिः करोतीत्युत्तरपदार्थप्रधाने समासे प्रधानस्यापेक्षया योगात् षत्वं सिध्यति। तथापि परमं सर्पिर्यस्य सर्पिषः समीपं सर्पिषो निष्क्रान्तमिति परमसर्पिष्करोति उपसर्पि

१ २-१-६। २ ६-४-१। ३ ६-१-३४०। ४ ६-४-६१। ५ ७-४-६६। ६ १-१-१०१

ष्करोति निःसर्पिःष्करोत्यत्र न सिध्यति, सर्पिः शब्दस्य करोतिक्रियायाश्च व्यपेक्षाया अभावादिति तदर्थमिदं ज्ञापकमिति भावः ।

'भ्रातुष्पुत्रकस्कादयः' । २ । ३ । १४ ॥ मायस्कः सद्यस्क्रीशब्दादेव प्रत्यये मायस्कस्य सिद्धत्वात् पृथगुपादानं प्रत्ययान्तरनिवृत्त्यर्थं तेन मद्यस्क्रिया भावः सद्यस्क्रीतेत्यत्र न सत्वम् । कौतस्कुतः-गणपाठादण् । अन्यथा " भेदे मतब० " इति त्यप् स्यात् । किञ्च तसन्तस्य प्रथमान्तत्वेन तत इति पञ्चम्यन्ताद्विधीयमानो न प्राप्नोति, केचित् त्यपञ्चम्यन्ताद्प्यणमिच्छन्ति । ततस्तन्मते न " तेन आगते " इत्यनेन वाऽण् । ननु द्वित्वे कृते एकपदत्वाभावात् कथं " तेन आगते " इत्यण् ? सत्यम्, भूतपूर्वकन्यायाद्भविष्यति । अहस्करः-अहः करोति लिहाद्यचिविकार्य कृगस्तु " ऐतः कृकमि० " इति सिद्धमेव । अयस्कान्तेति-कनै इत्यस्य रूपं कामयतेस्तु " ऐतः कृकमि " इति सिद्धमेव कामयतेर्वा समस्तार्थमिह पाठः तेन परमायस्कान्त इत्यपि भवति । कस्क इति-यद्येवं कः कः कुत्र न घुर्घुरा(यित)यति घुरीयोरो घुरेस्त्वकर इत्यादि कथं ? यतस्तत्राऽपि कस्क इति स्यात् ? सत्यम् परमताभिप्रायेण । ते हि भ्रातुष्पुत्र० इदं सूत्रं सन्धिविधौ त्रिदधति ततो विरामे विवक्षिते सति " न सन्धिः " इत्यस्य प्रवृत्तेर्न सत्वम् ।

'नाम्यन्तस्थाकवर्गात्पदान्तःकृतस्य सः शिड्नान्तरेऽपि' । २ । ३ । १५ ॥ अनुस्वारभवनान्नित्यत्वादन्तरङ्गत्वाचेत्यर्थः, विसमिति-अव्युत्पन्नो प्रायः ।

'समासेऽग्नेः स्तुतः' । २ । ३ । १६ ॥ असत्र इति वचनात् सकारस्य पदमध्यत्वं नाऽस्तीति वचनम् ।

'ज्योतिरायुर्भ्यां च स्तोमस्य' । २ । ३ । १७ ॥ ज्योतिः स्तोमं दर्शयतीति *ज्योतिः प्रदीपादिकर्तृसमूहं दर्शयतीत्यर्थः ।*

'मातृपितुः स्वसुः' २ । ३ । १८ ॥ अकृतत्वात् पदादित्वाद्वाऽप्राप्ते विधानम् । सूत्रत्वाद् " आद्वेन्द्ध " इति न प्रवर्तते ।

'अलुपि वा' । २ । ३ । १९ ॥ पूर्वेणाऽप्राप्ते विभाषेयमारभ्यते । मातुःष्वसेति-" शर्पसे शपसं वा " इति पाक्षिके रस्य सत्वे चातूरूप्यम् ।

'निनद्याः स्नातेः कौशले' । २ । ३ । २० ॥ निष्ण इति, "वर्षमर्गोदागोडोऽश्यः"

---

१ ६-१-१६ । २ ६-३-१०९ । ३ २-३-५ । ४ ७-४-१११ । ५ ३-३-३९ । ६ १-३-६ । ७ ५-१-५१ ।

इतिं डप्रत्ययः, नदीष्ण इति नद्यां स्नातीति " स्थापास्नात्रः कः " इति कप्रत्ययः । नदीष्णातः प्रतरणे इत्यादिष्ववयवार्थो व्युत्पत्त्यर्थमेवाऽऽश्रीयते । कुशलत्वेन, त्वनेन क्रियासु तात्पर्येणाऽनुष्ठातोच्यते ।

' प्रतेः स्नातस्य सूत्रे ' । २ । ३ । २१ ॥ प्रत्ययान्तरनिवृत्त्यर्थमिति, अन्यथा पूर्वसूत्रात् स्नातिरनुवर्तिष्यत एव किं तदुपादानेनेत्यर्थः ।

' वस्त्रः ' । २ । ३ । २३ ॥ विष्टर इति विस्तृणातीत्यच्, विस्तीर्यत इत्यल् विष्टार पङ्क्तिरिति-विस्तीर्यते " छन्दो नाम्नि " इति घञ्, विस्तारस्य पङ्क्तिर्विस्तरस्य बृहतीति वाक्ये तु न घञ् संज्ञाया अभावात् समुदाये नहि संज्ञागम्यते ।

' अभिनिष्टानः ' । २ । ३ । २४ ॥ अत्रोपलक्षणत्वांसिरोऽपि ग्रहः ।

' गवियुधेः स्थिरस्य ' । २ । ३ । २५ ॥ अनयोः सप्तम्यन्तानुकरणयोरपि युष्छब्दस्य यथा प्राप्तः " अदूरयङ्क्रनीत् " इत्यनेनैवाऽलुप् ।

' एत्यकः ' । २ । ३ । २६ । विष्वक्सेनः-विषुवति परसेनां विषूः प्रेरकस्तमञ्चति क्विपि ङ्यां विषूची, विषुशब्दोऽव्ययं वा नानात्वे वर्तते तदञ्चति । यद्वा विष्वगित्यव्ययं सामस्त्ये वर्तते पश्चाद्विष्वपि बहुव्रीहिः ।

' भावितो वा ' । २ । ३ । २७ ॥ बिभर्तेः करणेऽनटि " अर्धेड " इत्याद्यणौ वा भरणिः । रोहिण्य इव, रेवत्य इव, भरण्य इव करयाणिनी सेना यस्येति । पुनर्वस्वनयोराराधितयोः पुनर्वसू । शतभिषज्-शतभिषा नक्षत्रमतो भ इति व्यावृत्तेर्न द्वयङ्गवैकल्यम् ।

' विकुशमिपरेः स्थलस्य ' । २ । ३ । २८ ॥ नाम्नीति निष्ठलम्-विष्ठलादिशब्दैः संज्ञाया अप्रतीतेः । अत्र विकुशब्दावव्ययानव्ययौ विशेषानुपादानाद्ध्यपि गृह्यते, तत्राऽव्ययपक्षे " गतिक्वन्य० " इति " प्रात्यव० " इति च तत्पुरुषोऽन्यत्र षष्ठीसमासः इत्याह-विगतं वीनां वेति-दीर्घास भवतीति-बाहुलकाश्च ह्रस्व इत्यर्थः ॥

' कपेर्गोत्रे ' । २ । ३ । २९ ॥ गोत्रमिहेत्यादि-ननु स्वापत्यसन्तानस्येत्यादि लक्षणं शास्त्रीयं ।

' गोऽम्बाम्बसव्यापद्वित्रिभूम्यग्निशेकुशङ्कुकङ्गुमञ्जिपुञ्जिपर्हिःपर-

१ ५-१-१४१ । २ ५-१-७० । ३ १-१-१६ । ४ अष्टा० ६१८ । ५ १-१-४१ ।
६ १-१-४७ ।

द्वेचेः स्थस्य '[1] । २ । ३ । ३० ॥ गोष्ठमिति–गावस्तिष्ठन्त्यस्मिन्निति " स्थादिभ्यः " इति कप्रत्ययः । अम्बयते अपद्धवकारितया यस्मि अम्बोऽपद्धवकर्ता तस्याऽयं धर्मभूतोऽपि आम्बोऽपद्धवरूपो धर्मस्तत्र तिष्ठतीत्यधिकरणे तु सर्वत्र " स्थादिभ्यः कः" कुष्ठभूदमित्यनयोः " क वीशमि० " इति, कौंकु उद्भिद्विशेषः । " शङ्कुः यन्त्र-राजाले, संख्याकीलकशम्भुषु " सवनीयः मन्त्रः " य ऐथाऽनः " मञ्जेः सौत्रस्य पंक्तिपठि० " इति इप्रत्यये मञ्जिः । पुद्‌पवने इत्यस्मात् " पुंसः पुन् च " इति पुञ्जः । इयाऽऽञ्चरति । " पञ्चुः क्विप् " तस्य लुप् पुञ्जतीति " स्थरेभ्य इः " पुञ्जिः ।

' निर्दुस्सोः सेधसन्धिसाम्नाम् ' । २ । ३ । ३१ ॥ निर्गतः सेधात् । प्येध इति दुष्टः सेधः, अत्र रेफस्य सकारेऽत्रेन शिअन्तरत्वात् परसकारस्य षत्वे पूर्वकारस्य च " सस्य शषौ " इति षत्वे निष्षेधादयः ।

' प्रष्ठोऽग्रगे ' । २ । ३ । ३२ ॥ प्रतिष्ठते प्रष्ठः । " उपसर्गादातो डः " न तु ' स्थापा० " इति कस्तस्य नाम पूर्वाद्धातोर्विहितत्वान्नामग्रहणे च प्रत्येणोपसर्गस्य न ग्रहणमित्यस्याऽर्थस्य ज्ञापयिष्यमाणत्वात् ।

' भीरुष्ठानादयः ' । २ । ३ । ३३ ॥ सव्ये तिष्ठति " संख्यातस्थः " इति डिति कप्रत्यये सव्येष्ठ " तत्पुरुषे कृति " इति सप्तम्यलुप् । असौ सव्येष्ठा सारथिः । अन्ये तृप्रत्ययान्तस्य च्छन्दोविषयत्वादाकारान्तः क्विबन्तोऽयमिति मन्यन्ते । तन्मते सव्येष्ठा इति विसर्गान्तः । " तत्पुरुषे कृती "त्यलुप्, परमेष्ठिमित्यत्र गणपाठसामर्थ्यादलुप् । गौरिषक्थः–गौर्या इव सक्थिनी यस्य स " सक्थ्यक्ष्णः " इति टः । "ड्यापो बहुल०" इति ह्रस्वः । प्रतिस्नात्यस्यामिति " स्थादिभ्यः " इति कप्रत्ययः । कुत्सिता प्रतिष्ठा नावः सेचिका ।

' ह्रस्वान्नाम्नस्ति ' । २ । ३ । ३४ ॥ सर्पिष्ट इत्यत्र अहीयरुह इति तस् । निर्गतो वर्णाश्रमेभ्यो " निसो गते " यच् प्रत्ययः । अन्तरङ्ग इति–अयमर्थः परत्वात्पूर्वमपि प्लुते आमध्याश्रयत्वेन बहिरङ्गत्वं प्लुतस्य–सर्पिस्तत्र–ननु सर्पिस्तत्र-त्यादौ "वेसुसोऽपेक्षयाम्" इति कस्तपकोऽति व्याहृत्यैव षत्वव्यावृत्तेः सिद्धत्वात्किमनेन ? नैवम् । अपेक्षायां प्राप्तिरनेन तु अनपेक्षायामपि प्रकल्पते । यथा पश्याऽत्र सर्पिस्तत्र यजुर्वर्तत इति ।

---

१ ५-३-८२ । २ ५-३-८२ । ३ ५-१-२८ । ४ उणा० ६०२ । ५ उणा० १३८ । ६ ५-१-११५ । ७ उणा० ६०६ । ८ १-१-१२६ । ९ ५-१-१४२ । १० उणा० ८५५ । ११ ३-२-२० । १२ ५-३-१२६ । १३ २-४-९९ । [illegible] ५-३-८२ ।

'**निसस्तपेऽनासेवायाम्**'। २ । ३ । ३५ ॥ निरतपत्–अत्र पूर्वं कृतमपि षत्वं परस्मिन्नडागमे । "णषमसत्" इत्यनेनाऽसिद्धम् । निस्तातप्तीति–अत्र भृशं निष्टपतीति वाक्यं कार्यम् । आभीक्ष्ण्ये त्वनासेवायामिति न्यावृत्त्यैव निरस्तत्वात् अन्त्यत्वादप्राप्ते वचनम् ।

'**घस्वसः**'। २ । ३ । ३६ ॥ अत्र वसो मौवादिकस्य ग्रहः वसिक् आच्छादने इत्यस्य यवृद्भावेन नामिनः सस्याऽसम्भवात् । अदाघनदाद्योरिति न्यायाद्वा । वहूंषीति–वसतीति क्विपि य्वृतिः उषः बहव उषो येषु तानि । अत्र नागमरूपे स्याद्विविधौ प्रथमं कृतमपि षत्वं निवर्तत इति प्राग्नागमस्तस्मिंश्च नामिनो व्यवधानेऽपि शिड्नान्तरेऽपीति षत्वम् ।

'**णिस्तोरेवास्वदस्विदसहः षणि**'। २ । ३ । ३७ ॥ प्रतीषिषतीति–अत्र 'इंण्क्' गताविति लिख्यते तस्य च ज्ञानार्थत्वात् "सनीङश्च" इति न गम्वादेशः । 'इंक्' स्मरणे, 'इङ्क्' अध्ययने इत्यनयोस्तु अज्ञान इति विशेषणं नाऽसम्भवात् । अतोऽनयोर्गम्वादेशः प्राप्नोतीत्येतौ न लिख्येते । 'इंण्क्' गताविस्यस्याऽप्यज्ञानार्थत्वविवक्षायामादेशप्राप्तिः । इंङ् इत्यस्य तु ज्ञानार्थत्वविवक्षायामविवक्षायामपि नादेशः । "इंणिकोर्गाः" इत्यत इणिकोरेवाऽनुकृष्टत्वात् "सनीङश्चे"ति चकारेण । सोषुपिषत इति–अत्र यङोऽकारस्य स्थानित्वेन न गुणः । तथा "भ्वाम्यन्त०" इत्यस्यैवाऽयं नियमः, एतद्विषय एवाऽऽरम्भात् ।

'**सञ्जेर्वा**'। २ । १ । ३८ ॥ इकारान्तनिर्देशादिति–अत एवेह इकार उच्चारणार्थो न कश्चिदपि विहितः ।

'**उपसर्गात् सुग्सुवसोस्तुस्तुभोऽट्यप्यद्वित्वे**'। २ । ३ । ३९ ॥ ण्यन्तानामिति–धात्वन्तरत्वादिति शेषः । अट्यपीति–विशेषविहितत्वेन पूर्वं कृतमपि षत्वं परस्मिन्नडागमेऽसिद्धं स्यादिति । सौति सुवत्योरिति–'षुंक्' प्रसवैश्वर्ययोः इत्यनयोः । सुविसुवत्योरिति–षूङौच् षूङौक् इत्यनयोः ।

'**स्थासेनिसेधसिचसञ्जां द्वित्वेऽपि**'। २ । ३ । ४० ॥ अथ सुस्थितो दुःस्थित इत्यादौ कथं षत्वाभावः ? उच्यते–उपसर्गप्रतिरूपका निपाता एते इत्युपसर्गत्वाभावात्षत्वाभावः । ण्यन्तानामपीति–णिगः प्रागेवोपसर्गसम्बन्धात् । अपोपदेशार्थमिति–अपोपदेशत्वं च सह इनेन वर्तत इति व्युत्पत्तौ । सेनेति साधितस्याऽपि वा व्युत्पत्तिपक्षे । स्थासञ्जोरिति–उपसर्गस्थस्य नामिनोऽवर्णान्तेन द्विर्वचनेनेत्यर्थः ।

१ २-१-६० । २ ४-४-२५ । ३ ४-४-२१ । ४ २-३-१५ ।

नियमबाधनार्थमिति-सेनेस्तु " णिस्तोरेव० " इति सिद्धं तिष्ठतेस्तु मन् पत्वरूपो नाऽस्तीति ।

' अवाच्चाश्रयोर्जाविदूरे ' । २ । ३ । ४२ ॥ समुदायानुवृत्तावपि व्यभिचारादञ्ज इत्यस्यैव ग्रह इत्याह-अञ्जे इति-दुर्गमिति-दुःखेन गम्यतेऽस्मिन्निति । " सुगदुर्गमाधारे " इति सिद्धिः । कर्मण्युत्पत्तौ तु खलस्यात्, अनित्यार्थमिति-यद्येवं तर्हि चोपादित्येवंविधमतः सूत्रात् पृथगेव कथं न कृतं ? सत्यम्, विचित्रा सूत्रकृतिः ।

' सदोऽप्रतेः परोक्षायां त्वादेः ' । २ । ३ । ४४ ॥ उपसर्गादित्यनुवर्तते, व्यवादित्यननुवृत्तौ तु तयोरेव विधानात् प्रतिवर्जनानर्थक्यं स्यात् ।

' स्वञ्जश्च ' । २ । ३ । ४५ ॥ अभिषिष्वं स्वत इति-नन्वत्र " णिस्तोरेव " इति नियमात् मूलधातुसकारस्य षत्वं न प्राप्नोति । उच्यते-स्पर्धे पर इति न्यायादिदमेव प्रवर्तते । अभिषस्वञ्ज इति अत्र " स्वञ्जेर्नवा " इति परोक्षायाः वा किव्वम् पक्षे किद्भावाञ्च लोपाभावः ।

योगविभागादित्यादि-ननु योगविभागात्परोक्षायां त्वादेरिति नाऽनुवर्तत इति कथं न विज्ञायते ? सत्यम्, व्याख्यानतो विशेषप्रतिपत्तिरिति ।

' परिनिवेः सेवः ' । २ । ३ । ४६ ॥ सेव इति सामान्योक्तेऽपि षेवृङिति गृह्यते । न तु सेवृङिति । कृतस्येत्यनुवृत्तेः ।

' सयसितस्य ' । २ । ३ । ४७ ॥ स्यतेर्वा नियमार्थमिति-उद्योतकरस्त्वाऽऽहसिनोतेरेव ग्रहणं न्याय्यं सयेत्यनेन साहचर्यात् । किञ्च स्यतिग्रहणे नियमार्थता जायते, सिनोतिग्रहणे तु विध्यर्थता । विधिनियमसम्भवे च विधिरेव ज्यायान् । न च वाच्यमेकेनैव सितग्रहणेन स्यतिसिनोत्युभयस्योपादानाद्विध्यर्थता नियमार्थताऽपि स्यादिति । यतोऽर्थैकत्वादेकवाक्यमिति केषांचिद्वाक्यलक्षणम् । अर्थैकत्वाच्च सयसित इति वाक्यसमाप्तौ स्यतिग्रहणार्थं वाक्यान्तरं करणीयं भवतीति सिनोतेरेव ग्रहणम् । मा विषसयदिति-विषयमाख्यत् " णिश्रिद्रुस्रु० " अत्र द्वित्वे कर्तव्ये " णषमसत्० " इत्यनेन षत्वनिवृत्तावन्यस्येति द्विर्वचनम् । व्यसायीयदिति-विषयमैच्छत् क्यन्, क्यनि ईः । पर्यसितायतेति-परिषित इवाऽऽचरत् क्यङ् " दीर्घश्च्वि० " इति दीर्घः ।

' असोङसिवूसहस्सटाम् । २ । ३ । ४८ ॥ सो ङेत्येतयोर्द्वन्द्वे पश्चाद्नञोऽन्यपदार्थे । " सिवूसह० " लक्षणे बहुव्रीहौ कर्मधारये च पुनर्द्वन्द्वः ।

---

१ २-३-३७ । २ ४-३-२२ । ३ ३-४-४२ । ४ २-१-६० । ५ ४-३-१०८ ।

'स्तुस्वञ्जश्चाटि नवा' । २ । ३ । ४९ ॥ स्तुस्वञ्जोर्नित्यं प्राप्त इति-गोत्स्तुगिति स्वञ्जश्चेत्याभ्यामित्यर्थः ।

'निरभ्यनोश्च स्यन्दस्याप्राणिनि' । २ । ३ । ५० ॥ पर्युदासोऽयमिति-मर्थोऽप्राणिनीति पर्युदासत्वाद्विधिप्राधान्यात् । सम्भवति चैकवाक्यत्वे वाक्यभे यगस्याऽयुक्तत्वात् । प्रसज्यप्रतिषेधे तु न चेदित्यादिवाक्यभेदस्याऽवश्यम्भावित्त ततो यत्र प्राणी चाऽप्राणी च भवति । तत्राऽपि षत्वं भवति । प्रसज्यप्रतिषेध : प्रसङ्गं कृत्वा प्रतिषेधः प्रसज्यप्रतिषेधः "अव्ययं प्रवृद्धादिभिः" इति सः । प्रस् स्तु निषेधकृदित्यत्र तु ते लुग्वेति प्रतिषेधलोपः । ननु तदा अव्ययस्येति कथं लुप् ? उच्यते-समाससम्बन्धी सिरत्र नाऽव्ययस्येति न भवति ।

'परेः' । २ । ३ । । ५२ ॥ योगाविभागादिति विपरिभ्यां स्कन्दोक्तयं त्येषरूपात् ।

'निर्नेः स्फुरस्फुलोः' । २ । ३ । ५३ ॥ निस्फुरतीति निसः सकार रुत्वं "शषसे०" इति तस्य सत्वमनेन धातुसकारस्य षत्वं, "सस्य शषौ" । षत्वम् । षत्वा भावपक्षे कदाचिद्विसर्गः कदाचिद् "व्यत्यये लुग्वा" इति लोप मूर्धन्याभावपक्षे कदाचित्सकारद्वयस्य श्रवणं कदाचिद्विसर्गलोपौ ।

'वेः' । २ । ३ । ५४ ॥ स्फुरस्फुलोर्निर्निवेरित्येकयोगाभावोऽत्र ।

'स्कभ्नः' । २ । ३ । ५५ ॥ ननु श्नानिर्देशाद्यत्र श्नाप्रत्ययस्तत्रैव प प्राप्नोति न तु तदभावे विष्कम्भितेत्यादौ ? नैवम् श्नानिर्देशस्य श्नुनिषेधपरतय व्याख्यातत्वात् । विष्कभ्नातीत्यत्र क्षुभ्नादित्वात् णत्वाभावः । सम्नोर्मा भूदिति यदाह चन्द्रो यद्यत्राऽपि स्यात्तदा स्कम्भ इति निर्दिशेत् । तस्माच्छ्नानिर्देशादन्यः शिति प्रत्यये न षकार इति । शकटस्तु श्नानिर्देशः ष्टभुङ् स्कम्भुङिति सौत्रादिकानि वृत्त्यर्थमिति । अत एवोत्पलेनाऽपि विष्कभ्नाति विष्कभ्नोतीति श्नुप्रत्ययेऽपि पर गणपाठाभावात् णत्वं चोदाहृतम् ।

'निर्दुस्सुवेः समसूतेः' । २ । ३ । ५६ ॥ सम इति-समतीति प्रयोगैरुदे दास्य षमष्टमेत्यजन्तस्य भवति । सुतीत्यादादिकस्य "ईकिस्तिव०" इति स्तिन्यपि भवति । सुतिस्यतिसुवतीनां क्यन्तानां च । तत्र "श्वेषः स्वपः" इत्यनेन पृथग्योगान्नाम्नोरेव ग्रहणं न धात्वोरित्याहनाम्नोर्ग्रहणादिति-नामग्रहणे च लिङ्गविशिष्ट-

१ ३-१-४८ । २ १-१-६१ । ३ १-१-५६ । ४ ५-१-११८ । ५ २-१-५७ ।

स्याऽपि तेन सुषमा इत्यादि । धातोरेवेच्छन्तीत्युक्त्वा कथं निःसृतमित्याद्युदाहृतम् ? सत्यमुक्तप्रत्ययात्प्रागेव सृतेरुपसर्गेण योगाद्धनिष्पत्तिः ।

'अघः स्वपः' । २ । ३ । ५७ ॥ निःषुप्त इत्यादौ "[1]क्षानेच्छा०" इति क्तः ।

'प्रादुरुपसर्गाद्यस्वरेऽस्तेः' । २ । ३ । ५८ ॥ सुभ्रादित्वादिति, न्यासे तु "[2]चतुष्पाद्भ्य एयञ्" वृत्तौ तु सारसंग्रहाद्यभिप्रायेण "[3]शुभ्रादिभ्यः" इत्युक्तम् । विसृतमित्यादि-विसरतीति क्विपि तोऽन्ते 'क्विबन्ता धातुत्वं नामत्वं च न त्यजन्तीति' न्यायाद्विसृदित्येवंरूपाद्धातुमात्रादमूरूपे स्वरादौ प्रत्ययेऽस्तेरिति किमिति व्यावृत्तेर्न ह्यङ्गविकलता । यदा तु कस्तदापि अस्तौ सति यस्वरस्य प्रत्ययस्येति न चिन्तेति न ह्यङ्गविकलता ।

'न स्सः' । २ । ३ । ५९ ॥ दधिस्यते, अत्राऽस्यलोपे स्सः ।

'सिचो यङि' । २ । ३ । ६० ॥ षत्वमिति "[4]शासेनि०" इत्यनेन ।

'गतौ सेधः' । २ । ३ । ६१ ॥ ननु कसरधूमरखेमरकेमरादिषु प्रत्ययसका-रस्य षत्वप्रतिषेधो वक्तव्यः ? नैवम्, उणादयोऽव्युत्पन्नानि नामानीति, सुखबोधनार्थं व्युत्पाद्यमाना अपि उणादयो व्युत्पत्तिकार्यं न लभन्ते । इत्थं सति वृक्ष इत्यत्राऽपि षत्वं न प्राप्नोति ? उच्यते-तर्हि बाहुलकात् षत्वभावः ।

'सुगः स्यसनि' । २ । ३ । ६२ ॥ अभ्यस्तोऽस्यदित्यत्राऽप्यप्राप्तीति वचनात् "[5]उपसर्गात्सुग०" इति प्राप्तं निषिध्यते ।

'रषृवर्णान्नो ण एकपदेऽनन्त्यस्याल्चटतवर्गशसान्तरे' । २ । ३ । ६३ ॥ ननु ऋवर्णग्रहणं किमर्थं ? यतो ऋकारमध्ये रेफः लृकारमध्ये तु लोऽस्तीति वृद्धवादः, ततो ऋवर्णेऽपि तन्मध्यव्यवस्थितरेफाश्रयं णत्वं भविष्यति; अत एव पाणिनिनाऽपि रषाभ्यामित्येवोक्तम्, उच्यते-न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते तद्भिन्नत्वाद् वर्ण-बुद्धेरनुत्पादनात्तथाहि-मांसं न विक्रेयमिति सत्यपि निषेधे गावो विक्रीयन्ते, तत्र मांसबुद्धेरभावात् । शेषवर्णव्यवधानेऽपीति-प्रसज्यप्रतिषेधादितरैर्व्यवधानेऽपि भवति । पुष्णातीति-अत्र "[6]तवर्गस्य०" इत्यनेनैव षत्वे सिद्धे षकारग्रहणं कारणमित्यादौ व्यवहितार्थं तदर्थं च सत् परत्वात् "तवर्गस्य०" इति बाधित्वा परं प्रवर्तयति । नृभि-र्नृभिरिति द्विःप्रयोगो द्विर्वचनमित्याश्रयणाद्भिन्नपदत्वमित्यर्थः । त्रिस्तेनेति-त्रिपूर्वा-

---

१ ५-३-१२ । २ ६-३-८२ । ३ ७-३-१८२ । ४ २-३-४० । ५ २-३-३९ । ६ १-३-६० ।

द्रमे "मुरल०" इति निपातनात्, डित्यले । ऋपीणामित्यादौ दीर्घरूपे स्यादिविधौ कर्तव्ये पूर्वकृतमपि णत्वमसिद्धं भवति ।

'पूर्वपदस्थात् नाम्न्यगः' । २ । ३ । ६४ ॥ सामर्थ्यादिति-अयमर्थः रूढेन पूर्वपदशब्देन उत्तरपदमाक्षिप्यते, तदन्तरेण तस्याऽसम्भवाच्च नकारस्य विशेषणम् । पुष्पणन्दीति-पुष्पच् पुष्प्यन्तीत्यचि पुष्पाणि नन्दयति अण्, ङी, पुष्पणन्दी आचार्यः । यत्सक्षपणकार्प्यटैर्निश्चिक्ये, दिगम्बरेण तु योपान्त्यः, स च न शिष्टसम्मतः । वाध्रीणसः-वध्रस्येयं तस्येदमण् ङीः । "तद्धितस्वरे०" इति पुंवन्निषेधः । ऋगयनमिति-शिक्षादिषु ऋगयनपाठादेव णत्वनिषेधे सिद्धे किमग इत्यनेन? सत्यम्, अबाधकान्यपि ज्ञापकानि भवन्ति । उत्तरपदसम्बन्धी नकारो न भवतीति-"प्रत्ययः प्रकृत्यादेः" इति न्यायात् । पूर्वेणैव णत्वमिति-ननु पूर्वेणाऽपि कथं यतः खरपशब्दस्याऽन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वमस्ति, तत्स्थत्वाद्रेफस्य चेत्येकपदत्वाभावादिति । अत्रोच्यते-यत्र द्वावपि निमित्तनिमित्तिनावेकपदत्वं व्यभिचरतस्तत्र णत्वाभाव इह तु रेफस्य व्यभिचारेऽपि नकारस्यैकपदस्थत्वाव्यभिचारः । यद्वा सित्येवेति नियमेनायनण्प्रत्यये खरपशब्दस्य पदत्वस्य निरस्तत्वात् पूर्वेण भवत्येव । मनोहरा-वृक्षविशेषाः ।

'निष्प्राग्रेऽन्तःखदिरकार्श्याम्रशरेक्षुप्लक्षपीयूक्षाभ्यो वनस्य' । २ । ३ । ६६ ॥ निष्प्राग्रेन्तरो नौषधिवचना नाऽपि वृक्षवचनाः तेभ्यः संज्ञायां कोटरादिनियमेन व्यावर्णितत्वादप्राप्तं णत्वं विधीयते । असंज्ञायामप्येकपदत्वाभावादप्राप्तमेव । इक्षुशरशब्दावोषधिवचनौ शेषा वृक्षवचनास्तेषां संज्ञायां कोटरादिनियमेन णत्वस्य व्यावर्तितत्वादुत्तरेणाऽप्राप्ते विध्यर्थं, असंज्ञायां तूत्तरेण विकल्पे प्राप्ते नित्यार्थम् । कार्श्यवर्णमिति-कार्श्यशब्दो वृक्षविशेषवाची अव्युत्पन्नोऽथवा कृष्यते "नीम्युपान्त्य०" इति के व्यणि धर्मधर्मिणोरभेदोपचाराद् कार्श्यगुणयुक्तो वृक्षोऽपि कार्श्यः । पीयुक्षेति-पीयुक्षाशब्दो द्राक्षापर्यायो द्राक्षाविशेषो वा । पीङ्च क्विपि पीः पियं याति "पीमृग०[५]" इति किदुः, पीयुं क्षायति "आतो डो०[४]" इति डः ।

'द्वित्रिस्वरौषधिवृक्षेभ्यो नवाऽनिरिकादिभ्यः' । २ । ३ । ६७ ॥ कोद्रवणमिति-केनाऽम्भसा उद्यन्ते-क्लिद्यन्ते "केरव०" इति साधुः केनोद्भवन्त्युच्छन्द्यन्तेऽर्चि वा । लता वल्लीकर्कोट्यादिका, गुल्मा ह्रस्वस्कन्धास्तरवो बहुकाण्डपत्राः केतक्यादयः, एतल्लतागुल्मरूपं द्वयं वीरुधः । उत्पलस्त्वेवं व्याचष्टे-लता गुल्मास्तेभ्यो विलक्षणा वीरुधः । पुष्पं विना फलमेव यस्य स प्लक्षादिः फली । पुष्पं च

१ २-४-६२ । २ ५-१-५४ । ३ उणा० ७४१ । ४ ५-१-७६ । ५ उणा० ५११ ।

फलं चोपगच्छन्ति पुष्पफलोपगाः "नाम्नो गमः०" इति डे-वृक्षाः पुष्पफलोपगा इति । न चोभयमेवोपगच्छन्ति त एव वृक्षाः किं तर्हि ? येऽप्यन्यतरत् पुष्पं फलं चोपगच्छन्ति तेऽपि वृक्षा एव । तत्र वेतसादयः पुष्पमेव प्लक्षादयः फलमेवाऽऽम्रादयस्तूभयमप्युपगच्छन्ति । तत्र वृक्षो वनस्पतित्वमवकेशित्वं च न व्यभिचरति । वनस्पतिरवकेशी तु वृक्षत्वं व्यभिचरतः । यतः "फली वनस्पतिर्ज्ञेयः फलपुष्पस्तवकेशी" इति । अत एव च वनस्पत्यादिग्रहणमकृत्वा वृक्षग्रहणं कृतं तदन्तर्गतत्वाद्वनस्पत्यादेरिति । विदारी-लताविशेषः ।

'गिरिनद्यादीनाम्' । २ । ३ । ६८ ॥ तूर्यमाण इति-तूर्यं मानमस्येति वाक्ये निमित्तनिमित्तिनोरेकपदस्थत्वाभावादप्राप्ते विकल्पः । तूर्यतेस्तत्रानविषये मागमे च "रषृवर्णा०" इति नित्यं प्राप्ते । *शिक्षादित्वादिति-अन्यथा बहुस्वरत्वात् प्रायो बहु*स्वरादिकण् स्यात् ।

'पानस्य भावकरणे' । २ । ३ । ६९ ॥ सौवीरपाणमिति-सौवीरेषु प्रायो भवं बाहुलकादकञं बाधित्वा भवेऽण् । सुवीराणामिदं "तस्येदम्" इति वा ।

'देशे' । २ । ३ । ७० ॥ योगविभागादिति-अन्यथा 'पानस्य भावकरणदेशे' इति क्रियेत । तथाऽत्र कर्मसाधनः पानशब्दो गृह्यते, भावकरणप्रधानस्य तु पूर्वेण विकल्प एव उशीनरा इति-वशवत्त इति "वश्यादिभ्यः कः" वष्टीति क्विपि न्यूवि गौरादित्वात् ङ्यामुशी नगरी तस्या नराः । गान्धारयः-गान्धारस्याऽपत्यं वृद्धमत इञ् गान्धारिः राष्ट्रक्षत्रियसरूपः ततो गान्धारीणां राजानः, गान्धारे राज्ञोऽपत्यानि वा "गान्धारिसाल्वेयाभ्याम्" "धन्वऽयोऽश्या०" इति बहुत्वविषयां लुप् । ननु क्षीरपाणादयः शब्दा मनुष्येषु वर्तन्ते । तत्सामानाधिकरण्यादुशीनरादयोऽपि तेनैव तत्कथमिह देशो गम्यत इत्याह-तात्स्थ्यादित्यादि । अयमर्थः-उशीनरादयो हि शब्दाः संज्ञात्वेन पूर्वं देशेष्वेव प्रवृत्ताः पश्चात्तु तत्स्थानसम्बन्धात् मनुष्येषु तेन मनुष्याभिधानेऽपि तेन मनुष्यदेशाभिधानं गम्यते, दाक्षीणां पानमिति-अत्र कर्तरि षष्ठी ।

'ग्रामाग्रात् नियः' । २ । ३ । ७१ ॥ ननु "गतिकारक०" इति न्यायाद्विभक्त्युत्पत्तेः प्रागेव समासे निमित्तनिमित्तिनोरेकपदस्थत्वात् "रषृवर्णा०" इत्यनेनैव णत्वं सिद्धमेव किमनेनेति ? सत्यम्, नियमार्थं यदि नियो णत्वं स्यात्तदा ग्रामाग्रादेव तेन खरनीमेषनीत्यादौ पूर्वेणाऽपि न भवति ।

---

१ ५-१-१३१ । २ २-३-६२ । ३ ६-३-११० । ४ ५-३-८२ । ५ ६-१-११५ । ६ ६-१-१२६ । ७ ३-२-८५ । ८ २-३-६३ ।

'वाह्याद्वाहनस्य' । २ । ३ । ७२ ॥ वोढव्यं वाह्यमिति-वहेरर्हेऽर्थे घ्यणि वाह्यं वहनार्हमिक्ष्वादि तेन यदापि वाहने वहनार्थमिक्ष्वादि वाह्यं नाऽऽरोपितं भवति तदर्थं तु केवलमुपकल्पितं भूतलस्थं तदापि भवत्येव ।

'अतोऽह्नस्य' । २ । ३ । ७३ ॥ दीर्घाह्णी शरदिति-दीर्घाह्णी, दीर्घाह्णः, दीर्घाह्ण रूपत्रितयम् ।

'चोत्तरपदान्तनस्यादेरयुवपक्वाह्नः' । २ । ३ । ७५ ॥ प्राप्ताप्राप्तविभाषेयम् । तथाहि-लिखितेषु प्रयोगेषु "गतिकारक०" इति न्यायात् स्याद्युत्पत्तेः प्रागेव समास इत्येकपदात्प्राप्ते व्याघ्रीवत्पामा येषां तानि व्याघ्रीपामाणि व्याघ्रीपामानि वेत्यादिषु त्वदर्शितेष्वप्राप्ते । पाणिनिस्त्वप्राप्ते विभाषां मन्यते । तन्मतेऽपि वापोऽस्त्यनयोर्वापिनौ व्रीहीणां वापिनाविति यदा क्रियते तदाऽप्राप्ते । अत्रोत्तरपदस्यान्त्यो नकारो न भवतीति-किन्तु "प्रत्ययः प्रकृत्यादेः" इति न्यायेन गर्दभव इत्यस्य समुदायस्यैव । व्यह्नि-चतुरह्नीति अनयोर्भवेऽर्थेऽण्विषये "संख्याऽ०" इत्यनेनाऽट् अह्नादेशश्च । गर्दभवाहिनाविति-गर्दभान् वाहयत इत्येवंशीलौ ।

'कवर्गैकस्वरवति' । २ । ३ । ७६ ॥ न चेदिति-सत्यपि त्रितयानुवर्तने प्रतिषेधस्य प्राप्तिपूर्वकत्वात् कवर्गवत्त्वात् पक्वशब्दस्यैव प्रतिषेध इति । स्वर्गकामिणा-विति-सुखेन पुण्यकर्मभिरर्ज्यत इति घञि न्यङ्क्वादित्वाद्गे तं कामयेते इत्येवंशीलौ । मोक्षकामिणाविति-मुच्यन्ते प्राणिनः कर्ममलकलङ्केनाऽत्रेति "भावाकर्त्रोः" इति घञि । नित्यार्थमिति-अयमर्थः "गतिकारक०" इति न्यायेन निमित्तनिमित्तिनोरे-कपदस्थत्वात् "रषृवर्णा०" इति नित्यं प्राप्त "चोत्तर०" इति विकल्पितं पुनर-नेन नित्यं विधीयते इत्यर्थः ।

'अदुरुपसर्गान्तरो णहिनुमीनानेः' । २ । ३ । ७७ ॥ हिनुमीनानिग्रह-णात् समासस्याऽसम्भवात् पूर्वपदस्थादित्यस्य निवृत्तावविशेषेणोपसर्गात् णत्वविधिः । हिनुमीनाग्रहण इति-अथ प्रहिणोति प्रमीणीत इत्यत्र गुणे ईकारे च कृते हिनुमीने-त्येतद्रूपविरहात् स्थानीवेत्यस्याऽप्यसाद्विधौ स्वरस्य स्थानिवद्भावप्रतिषेधात् कथं ण-त्वमित्याह-विकृतस्याऽपीति । प्रवपाणि मांसानीति-उप्यत इति घञ् भिधायद् । आ-नीत्यर्थवत इति-चपानीति समुदायस्याऽर्थवत्त्वादानीत्यस्य पृथगर्थाभावादनर्थकत्वमु-पसर्गत्वाभावाद्वा । अत एव प्रवृद्धा इति शिष्टो वृत्तौ दर्शितः ।

---

१ १-२-८५ । २ ५-१-११८ । ३ धा० ५६४ । ४ ३-१-६५ । ५ १-२-११ । ६ १-१-७५ ।

'नशाः शः' । २ । ३ । ७८ ॥ प्रनष्ट इति–अत्र "नेर्मोऽधुटि" इति नागमस्य "नो व्यञ्जनस्य०" इति लुक् । प्रनङ्क्ष्यतीत्यादि–अत्र परेऽसदित्यन्तरङ्गत्वात् पूर्वं कृतमपि णत्वं पत्वादासत्त्वात् षत्वे कृतेऽप्येकदेशविकृतस्याऽनन्यत्वात् प्राप्तमपि श इति वचनात् साक्षाच्छकारान्तत्वाभावात् निवर्त्यते ।

'नेर्ङ्मादापतपदनदगदवपीवहीशमूचिग्यातिवातिद्रातिप्सातिस्यतिहन्तिदेग्धौ' । २ । ३ । ७९ ॥ न माठीत्यादि–नन्वेषां माङ्रूपाणां ग्रहणाशङ्काऽपि कुतः ? उच्यते–"मिग्मीगोऽखलचलि" इत्यनेनाऽऽत्वविधानात् । नाऽनुबन्धनार्थ इति–यया रीत्या धातुपाठे माङित्यपाठि तद्रीत्या यदि सूत्रेऽपि क्रियेत तदाऽनुबन्धार्थः स्यात् । अत्र तु विशेषणं ङकारेणोपलक्षितो मा इति । ननु "सप्तम्या निर्दिष्टे पूर्वस्य" तथाऽनन्तरस्य न व्यवहितस्येति न्यायात् प्रण्यास्यतीत्यादावाडा व्यवधाने न प्राप्नोतीत्याह–आङा व्यवधानेऽपीति–अयमर्थः "पदेन्तरे०" इति णत्वनिषेधकसूत्रे आङो वर्जनादाङा व्यवधानेऽपि भवति ।

'अकखाद्यषान्ते पाठे वा' । २ । ३ । ८० ॥ अत्राऽकखादिषान्त इति सिद्धे नञ्द्वयं सुखार्थं, नञ्द्वये हि सति कखादेः षान्तस्य च वर्जनं प्रतीयते । एतर्हिंमस्तु कखादेः किंविशिष्टस्य षान्तस्येति प्रतीतिः स्यात् । असम्भवात् न भविष्यतीति न वाच्यम् । कषशिषेत्यादावेवं निधस्याऽपि दर्शनात् । सौत्रेषु पाठादिति–ननु स्तम्भेर्धातुष्वपाठात् कथं पाठविषयत्वं ? उच्यते–सूत्राणां सूत्रमेव धातुप्रदेशः । प्रनिवेष्टेति–'निशत्' प्रवेशने, इत्यस्य रूपम् ।

'द्वित्वेऽप्यन्तेऽप्यनितेः परेस्तु वा' । २ । ३ । ८१ ॥ प्राणिणिषतीत्यादौ द्वयोरप्यनेनैव णत्वं द्वित्व इति वचनात् । हे प्राण !–अन्ते "नाऽऽमन्त्र्ये" इति नलोपप्रतिषेधात् नान्तत्वं सम्भवतीत्यामन्त्र्ये दर्शितम् । ननु द्वित्वेऽपि कृतेऽन्तेऽपीति वचनादन्तेऽपि शब्दादनन्तेऽपि भविष्यति किं द्वित्वेऽपीत्यनेन ? नैवम्, द्वित्वेऽपीत्यस्याऽभावे प्राणिणिषतीत्यत्र प्रथमनकारेऽन्तेऽपीत्यस्य चरितार्थत्वाद्द्वितीयनकारस्य णत्वं न स्यात् । टवर्गेण व्यवधानात् । अन्तेऽपीत्यत्राऽपि शब्दाभावे द्वित्वेऽप्यन्त एव स्यादिति । ननु द्वित्वे सत्यन्तस्थो नकारः क्व सम्भवति ? उच्यते–प्राणितेः सनि प्राणिणिषन्तं प्रयुङ्क्ते णिगि अल्लोपे क्विपि प्राणिणिषमाचष्टे णिजि पुनः "न्यन्त्यस्वरादेः" इत्यनेन इसिति लोपे क्विपि हे प्राणिण् ! इत्यादावामन्त्र्यत्वाच्च न लोपाभावे प्राणिणिषन्तीत्याद्यनन्तेऽपि ।

---

१ ४-४-१०३ । २ ४-२-४५ । ३ ४-२-८ । ४ २-१-९३ । ५ २-१-९२ । ६ ७-४-४२ ।

'**हनः**' । २ । ३ । ८२ ॥ प्रघ्नन्तीत्यादौ हन् इत्युच्यमानेऽप्येकदेशविकृतस्याऽनन्यत्वात् णत्वं प्राप्नोतीत्याह–हनोऽघ्नीति ।

'**वमि वा**' । २ । ३ । ८३ ॥ पूर्वेण नित्यं प्राप्ते विकल्पार्थम् ।

'**निंसनिक्षनिन्दः कृति वा**' । २ । ३ । ८४ ॥ नित्यं भवतीति–"अदुरुपसर्गा॰" इत्यनेन शेषः । णोपदेशत्वाद् "अदुरुपसर्गा॰" इत्यनेन गतिकारकङस्युक्तानामिति न्यायादविभक्त्यन्तैः कृदन्तैः सह प्रादीनां समासे सति निमित्तनिमित्तिनोरेकपदस्थत्वात् "रैपृवर्णा॰" इत्यनेन वा नित्यं णत्वे प्राप्ते विकल्पार्थमिदम् ।

'**स्वरात्**' । २ । ३ । ८५ ॥ "गतिकारक॰" इतिन्यायाद् "रपृवर्णा॰" इति सिद्धमेव किन्तु प्रयायिणौ परियायिणावित्यत्र "वोत्तर॰" इति वा णत्वं स्यात्तन्निवृत्त्यर्थमिदमारभ्यते । कृद्विषयस्येति–कृतीति विषयसप्तमीयं न निमित्तसप्तमी । तस्यां हि स्वरात् परस्य धातोर्नस्य कृन्निमित्ते णत्वमिति सूत्रार्थः स्यात् । न चैवदसम्भवान्न भविष्यतीति वाच्यम्, प्रेण्वनमित्यादावेवंविधस्याऽपि दर्शनात् । तथा च सति न ख्यापूग इत्यादि प्रतिषेधेऽनर्थकः प्राप्तेरभावात्तहि ख्यादीनां कृति निमित्तभूते स्वरात्परो धातुनकारोऽस्ति येन प्राप्तौ प्रतिषेधेऽर्थवान् स्यादिति स्वरादिति कृन्नकारस्य विशेषणं, न "अदुरुपसर्गान्तर॰" इत्यस्य धातोर्वा "देशेऽन्तरोऽयनहनः" इति प्रतिषेधाद्नेन हि प्राप्तस्य स प्रतिषेधः । न चाऽन्तःशब्दो धातुर्वा स्वरान्तो वा येन प्रतिषेधोऽर्थवान् स्यादिति । उपसर्गविशेषणे प्रभुग्न इत्यत्राऽपि स्यात् । कृद्विशेषणमपि प्रतिषेधोऽर्थवान् स्यादिति । उपसर्गविशेषणे प्रभुग्न इत्यत्राऽपि स्यात् । कृद्विशेषणमपि न । तस्मिन्नपि कृते कृतो यः स्वरस्ततः परस्य नकारस्येति स्थिते प्रयाणीयमित्यादौ प्राप्तिः । प्रहीण इत्यादौ न स्यादिति । प्रवल्ग्यमानमिति–वर्णैकदेशस्य वर्णग्रहणेन ग्रहणात् समुदायव्यापारे चाऽवयवस्याऽपि स्वव्यापारानुच्छेदेन व्यापारात् लकारे उच्चार्यमाणे तदवयवस्य लकारस्याऽप्युच्चारणमित्यलचटेति प्रवर्तत एव ।

'**नाम्यादेरेव ने**' । २ । ३ । ८६ ॥ प्रेङ्खणमित्यादौ घोत्तरेति नागमस्य विकल्पो नाम्नामिति बहुवचनेन बाधितत्वात् ।

'**व्यञ्जनादेर्नाम्युपान्त्याद्वा**' । २ । ३ । ८७ ॥ दुर्गूहन इति–दुर्गुह्यतेऽनेनाऽस्मिन् वा "करणाधारे" अनट् दुर्गुहतीति नन्द्यादिभ्यो वा–दुर्गूहन इत्यत्र "गोर्हः स्वरे" ऊत् ।

'**णेर्वा**' । २ । ३ । ८८ ॥ शेषेभ्यस्त्विति–नागमरहितेभ्यः ।

---

१ २-३-७७ । २ २-३-६१ । ३ २-३-७५ । ४ २-३-५१ । ५ ५-३-११९ । ६ ४-२-४२ ।

'निर्विण्णः' । २ । ३ । ८९ ॥ गतिकारकेतिन्यायाद् "ऋवर्णा०" इति सिद्धमेव किमनेन? सत्यम्, अनेन न्यायेन निर्विण्णज्ञानित्यत्राऽपि स्यात् तन्निवृत्त्यर्थमिदम् । एते त्रयोऽपि धातूनामनेकार्थत्वाद्वैराग्ये वर्तन्ते । निर्विण्ण इति-विदक् ज्ञाने इत्यस्य सेट्त्वात् । अलुचटेति व्याप्त्या चाऽप्राप्तौ क्तनकारस्य णत्वं निपात्यते, धातुनकारस्य तु "तवर्गस्य०" इति ।

'न ख्यापूग्भूभाकमगमप्यायवेपो णेश्च' । २ । ३ । ९० ॥ ख्या इति निरनुबन्धोपादानं ख्यादेशस्य ख्यांक् प्रथन इत्यस्य च परिग्रहार्थम् । नित्यमिति- "ऋवर्णात्" इत्यनेन । वेपो विकल्पेनेति-"ईयञ्जनादेर्नाम्युपा०" इत्यनेन ण्यन्तस्य चेति-"णेर्वा" इत्यनेन ।

'देशेऽन्तरोऽयनहनः' । २ । ३ । ९१ ॥ स्वरान्निति हन इति च यथासंख्यं प्राप्ते प्रतिषेधः । अन्तर्घण इति-"हनोऽन्तर्घनान्त०" इत्यलन्तो निपात्यते । वाहीकेषु देशविषयस्येयं संज्ञा । अन्तरयणो देश इति-इंढ्, इंणक् वा, अयतेऽस्मिन्नित्यनटि "स्वरात्" इति णत्वे । अयतौ तु "उपसर्गस्याऽयौ" इति लत्वं स्यात् ।

'षात् पदे' । २ । ३ । ९२ ॥ सर्पिष्पानमिति-नन्वत्र षकाराश्रितं मा भूण्णत्वं सर्पिःस्थरेफाश्रितं कथं नहि? उच्यते-यत्रोत्पद्यमानस्य णत्वस्य निमित्तद्वयं भवति तत्र प्रत्यासत्त्याऽनन्तरमेव गृह्यत इति । सर्पिष्केणेति-सर्पिष्कापयतीति सर्पिम्, अम् क्वा धातुः अग्रे इति स्थिते क इत्यस्याऽविभक्त्यन्तत्वात् पदत्वाभाव इति नाऽनेनत्वप्रतिषेधः । ननु उत्तरपदमपि पदमुच्यते यथा "वेदूतोऽनव्यय०" इत्यत्र पदे इत्युक्तेऽपि उत्तरपदे इति वृत्तिकृता व्याख्यातम्, तद्वदिहाऽपि पदे इत्युक्ते उत्तरपदमपि लभ्यते तत्कथं सर्पिष्केणेत्यत्र व्यावृत्तिः?, सत्यम्; '<u>नाऽनिष्टार्था शास्त्रप्रवृत्तिः</u>' इतिन्यायादेवंविधं व्याख्यानं न सर्वत्राऽपि युक्तं किन्त्वभिप्रेतसिद्ध्यर्थं क्वचिदेव । यदा तु कुत्सिताद्यर्थे कप् तदा निर्विवादमेव ।

'पदेऽन्तरेऽनाङ्यतद्धिते' । २ । ३ । ९३ ॥ चतुरङ्गयोगेन-अत्र "कवर्गैक०" इति प्राप्तं निषिध्यते । माषकुम्भस्य वापः माषस्य कुम्भवाप इत्यस्मिंश्च वाक्ये "वृत्त्यन्तोऽसषे" इति पदसंज्ञानिषेधेऽपि भूतपूर्वकं पदत्वमाश्रीयते । कवर्गैकस्वरवतीति-कवर्गाश्रितेन विशेषविहितत्वान्न तु "वोत्तर०" इति विकल्पः ।

'क्षुभ्नादीनाम्' । २ । ३ । ९६ ॥ क्षुभ्नेति क्षुभ्नातिश्निर्देशेन धातुग्रहणं न तु

---

१ २-३-६३ । २ १-३-६० । ३ २-३-८५ । ४ २-३-८७ । ५ ५-३-३४ । ६ २-३-१०० । ७ २-४-५८ । ८ २-३-७६ । ९ १-१-२५ । १० २-३-७५ ।

यङ्लुग्निवृत्त्यर्थम् । अनुबन्धनिर्देशे हि क्षोभणमित्यत्राऽपि स्यात् । एवं तृप्नुत इत्यत्राऽपि । यद्येवं तर्हि क्षुम्नीत इत्यादौ णत्वशास्त्रस्य परेऽसत्त्वादीकारादौ कृते क्षुम्नेति–रूपाभावान्न प्राप्नोति ? उच्यते–स्वरादेशस्य स्थानिवद्भावादेकदेशविकृतस्याऽनन्यत्वाद्वा भविष्यतीत्यदोषः । बहुवचनेन चाऽस्याऽऽकृतिगणता द्योत्यते । तेनाऽन्योऽप्यविहितलक्षणो णत्वप्रतिषेधः क्षुम्नादिषु द्रष्टव्यस्तेन धनदवाचकनरवाहनशब्दस्य न णत्वम् । नृनमित्येक इति–अविभक्तिको निर्देशः । अकारान्तस्त्वयं ज्ञातव्यः ।

'पाठे धात्वादेर्णो नः' । २ । ३ । ९७ ॥ नन्वादिग्रहणं किमर्थं तमन्तरेणाऽपि णोपदेशबलाण्णत्वं न भविष्यति, अन्यथा मनित्येव पठ्यते ?, नैवम्; णोपदेशस्य । "अदुरुपसर्गो०" इति णत्वे फलमस्ति, तथाह्युपसर्गपूर्वस्य प्रभणति अन्यत्र तु भनतीति स्यान्नित्यादिग्रहणं कर्तव्यमेव । पाठ इति किमिति–पाठ इत्यनेन धातूपदेशस्य ग्रहणाण्णकारीयतेरनुपदेशत्वाभावः । अथैते नादय एव पठ्यन्तां तथा च सति नेदमारब्धव्यं भवतीत्याह–णोपदेशश्चेति–एवमुत्तरत्र षोपदेशेऽपि ।

'षः सोऽष्ट्यैष्ठिवष्वष्कः' । २ । ३ । ९८ ॥ नन्वत्राऽप्यादेरित्यधिकाराभावेऽपि पाठबलादेव लषतीत्यादौ षत्वं न भविष्यति किं तेनेति ? सत्यं, परोक्षायामुसिकृतत्वात् सस्य षत्वे ष्वलेषुरित्यत्र फलम् ।

'ऋरलॢलं कृपोऽकृपीटादिषु' । २ । ३ । ९९ ॥ "दूरादामन्त्र्यस्य०" इत्यत्र ऋद्वर्जितस्य प्लुतत्वं वदन् स्वरद्वारेणैव सिद्धे पुनरपि यत् लकारग्रहणं करोति तदेव बोधयति ऋत्प्रतिषेधे लृतोऽपि प्रतिषेधप्रसङ्ग इति '<u>ऋकारोपदिष्टं कार्यं लृकारस्याऽपीति</u>' । अचीक्लृपत् अत्र "ॠदवर्णस्य," "ऋतोऽत्" चलीक्लृप्यत इत्यत्र "रिरौ च लुपि" इति सिद्धम् ।

'ग्रो यङि' । २ । ३ । १०१ ॥ निजेगिल्यत इति–अत्र ऋादेरित्यस्य परे लत्वेऽसत्त्वम् । यङेव नाऽस्तीति–" न गृणाशुभरुचः " इति निषेधात् ।

'नवा स्वरे' । २ । ३ । १०२ ॥ निगाल्यत इति–अत्र निपूर्वाद्गृतो णौ वृद्धौ लकारो णिलोपश्चेत्युभयप्राप्तौ नित्यत्वात् पूर्वं णिलोपः । न च '<u>प्रत्ययलोपे प्रत्ययलक्षणम्</u>' इतिन्यायेन लत्वस्याऽपि प्राप्तौ तस्याऽपि नित्यत्वं, वर्णाश्रये प्रत्ययलक्षणस्य प्रतिषेधात् ।

'ऋफिडादीनां डश्च लः' । २ । ३ । १०४ ॥ अर्चेर्बाहुलकात् फिडकृप-

१ २-३-७७ । २ ७-४-५६ । ३ ४-१-१० । ४ ४-१-३८ । ५ ४-१-५६ । ६ १-४-११ ।

त्यये ऋफिडः । अर्तेरेव के कुत्सादौ के ऋतकः । तृपौ च "तूणीकारतीक०" इति तर्पीकं । कपिरशब्दात् के–कपिरकं । नञ्पूर्वाद्रातेः "गमिजमि०" इति बहुवचनात् डित्यपि अरम् । लिखेः समानार्थात् रिखेर्भिदादौ रेखा । वडेः सौत्रात् "कृशृपृशलि०" इति अमे गौरादिल्यां च वडमी । वडेः सौत्रात् "कुलिकैनि०" इति किशि वडिशं । डिण्डिमिति ध्वनिमततीति "कौचित्" इति डे डिण्डिमः ।

'जपादीनां पो वः' । २ । ३ । १०५ ॥ विष्लंङ्खी "विष्पोऽत्प०" इति । तृतीयं विटपं प्राक्याल्लिविटपमिति पठन्ति ।

इत्याचार्यश्रीहेमचन्द्रानुस्मृते शब्दानुशासनेऽवचूरिकायां
तृतीयः पादः ॥



'स्त्रियां नृतोऽस्वस्रादेर्ङीः' । २ । ४ । १ ॥ अतिराज्ञीति–पूजितो राजा स्त्री चेदतिराज्ञीति । "पूजास्वतेः०" इति समासान्तप्रतिषेधः । राजानमतिक्रान्तेत्यपि कृते समासान्तविधेरनित्यत्वमिति काशिका ।

'अधातूदृदितः' । २ । ४ । २ ॥ गोमदादिशब्दोऽप्युदिदिति–अवयवधर्मेण समुदायोऽपि व्यपदिश्यते–अत्राऽवयव उदित्, तद्धर्मेण समुदायोऽपीत्यर्थः । सुकन्नित्यादि "स्नस्ध्वंसो०" इत्यत्र महत्साहचर्यात् क्विबन्तस्य ध्वंसो न ग्रहणमित्यर्थस्य ज्ञापितत्वादत्र न दीर्घः । प्रत्ययस्योदित्त्वादिति–अञ्चादेरित्यत्राऽऽवृत्तिव्याख्यानेन तदन्तस्य ग्रहणे सिद्धे यदिदं व्याख्यानं तत्प्रत्ययान्तरस्याऽपि दर्शनार्थम् । एवं एकस्याऽपि साध्यस्य सिद्ध्यर्थं बह्वयोऽपि युक्तय उपन्यस्यन्ते ।

'अञ्चः' । २ । ४ । ३ ॥ अञ्च इति कृतनलोपाभावस्य धातुरूपस्याऽञ्चेर्निर्देशस्तेनाऽर्चाविवक्षणे नलोपाभावे तदविवक्षणे लोपेऽपि ङीः सिद्धः । अच इति निर्देशे तु "अच्च् प्राग्दीर्घश्च" इतिवत् कृतनलोपस्यैव स्यात् । इत्थं च प्राञ्चीप्रत्यञ्चीत्यादौ ङीर्नाऽऽगच्छेत् ।

'णस्वराऽघोषाद्वनोरश्च' । २ । ४ । ४ ॥ ननु 'निरनुबन्धग्रहणे न सानुबन्धकस्य' इति क्वनिप्ङ्वनिपोर्ग्रहणं न प्राप्नोति ? उच्यते–'निरनुबन्धग्रहणे क्वचित्सानुबन्धस्य ग्रहणम्' इति न्यायात् न दोषः । वनोऽन्तस्येति–ननु प्रत्ययस्येति सर्वस्याऽपि प्राप्नोति

१ उणा० ५० । २ उणा० ९३७ । ३ उणा० ३११ । ४ उणा० ५३५ । ५ ५-१-१७१ ।
६ उणा० १०७ । ७ ७-३-७२ । ८ १-४-८६ । ९ २-१-१०४ ।

यद्दलुप्निवृत्त्यर्थम् । अनुबन्धनिर्देशे हि क्षोभणमित्यत्राऽपि स्यात् । एवं तृप्नुत इत्यत्राऽपि । यद्येवं तर्हि क्षुम्नीत इत्यादौ णत्वशास्त्रस्य परेऽसत्त्वादीकारादौ कृते क्षुम्नेति-रूपाभावान्न प्राप्नोति ? उच्यते-स्वरादेशस्य स्थानिवद्भावादेकदेशविकृतस्याऽनन्यत्वाद्वा भविष्यतीत्यदोषः । बहुवचनेन चाऽस्याऽऽकृतिगणता द्योत्यते । तेनाऽन्योऽप्यविहितलक्षणो णत्वप्रतिषेधः क्षुम्नादिषु द्रष्टव्यस्तेन धनदवाचकनरवाहनशब्दस्य न णत्वम् । नृनमित्येक इति-अविभक्तिको निर्देशः । अकारान्तस्त्वयं ज्ञातव्यः ।

'पाठे धात्वादेर्णो नः' । २ । ३ । ९७ ॥ नन्वादिग्रहणं किमर्थं तमन्तरेणाऽपि णोपदेशभलाण्णत्वं न भविष्यति, अन्यथा मनित्येव पठ्यते ?, नैवम्; णोपदेशस्य । "अदुरुपसर्गो०" इति णत्वे फलमस्ति, तथाऽनुपसर्गपूर्वस्य प्रमणति अन्यथ तु भनतीति स्यादित्यादिग्रहणं कर्तव्यमेव । पाठ इति किमिति-पाठ इत्यनेन धातूपदेशस्य ग्रहणाण्णकारीयतेरनुपदेशात्वाभावः । अथैते नादय एव पठ्यन्तां तथा च सति नेदमारब्धव्यं भवतीत्याह-णोपदेशश्चेति-एवमुत्तरत्र षोपदेशोऽपि ।

'षः सोऽष्ट्यैष्ठिवष्वष्कः' । २ । ३ । ९८ ॥ नन्वत्राऽप्यादेरित्यधिकाराभावेऽपि पाठबलादेव लषतीत्यादौ षत्वं न भविष्यति किं तेनेति ? सत्यं, परोक्षायामुगित्वस्यात् सस्य षत्वे ष्यलेषुरित्यत्र फलम् ।

'ऋरलृलं कृपोऽकृपीटादिषु' । २ । ३ । ९९ ॥ "दूरादामन्त्र्यस्य०" इत्यत्र ऋद्वर्जितस्य प्लुतत्वं वदन् स्वरद्वारेणैव सिद्धे पुनरपि यत्र लृकारग्रहणं करोति तदेव बोधयति ऋत्प्रतिषेधे लृतोऽपि प्रतिषेधप्रसङ्ग इति 'ऋकारापदिष्टं कार्यं लृकारस्याऽपीति'। अचीक्लृपत् अत्र "ऋदवर्णस्य," "ऋतोऽत्" चलीक्लृप्यत इत्यत्र "रिरौ च लुपि" इति सिद्धम् ।

'घो घङि' । २ । ३ । १०१ ॥ निजाघिदयत इति-अत्र ध्यादेरित्यस्य परे लत्वेऽभवनम् । यङ्र नाऽस्तीति-"न गृणाशुभरुचः" इति निषेधात् ।

'नवा स्वरे' । २ । ३ । १०२ ॥ निगाल्यत इति-अत्र णिलुगाद्यो णौ कृते लकारो णिलोपश्चेत्युभयप्राप्तौ नित्यत्वात् पूर्वं णिलोपः । न च 'प्रत्ययलोपे प्रत्ययलक्षणम्' इतिन्यायेन लत्वस्याऽपि प्राप्तौ तस्याऽपि नित्यत्वं, स्थानिवत्त्वप्रत्ययलक्षणस्य प्रतिषेधात् ।

'परिघादीनां डश्च लः' । २ । ३ । १०४ ॥ प्रर्मेद्रादुत्तरात् निरद्‌द-

१ ३-१-४४ । २ [illegible] । ३ [illegible] । ४ [illegible] । ५ [illegible] । ६ २-४-३१ ।

स्यये ऋफिडः । अर्चेरेव क्ते कुल्मादौ के ऋतकः । तृपौ च "ईणीकास्तीक०" इति तर्परीकं । कपिरशब्दात् के–कपिरकं । नञ्पूर्वाद्रातेः "गमिजमि०" इति बहुवचनात् डित्यपि अरम् । लिखेः समानार्थात् रिखेर्भिदाद्यङि रेखा । वडेः सौत्रात् "कॄशॄपॄशलि०" इति अभे गौरादिद्यां च वडभी । वडेः सौत्रात् " कुलिकनि० " इति किशि वडिशं । डिण्डिमिति ध्वनिमवतीति " कौचित् " इति डे डिण्डिमः ।

' जपादीनां पो वः ' । २ । ३ । १०५ ॥ विष्टंड्डी " विटपोलप० " इति । तृतीयं विटपं प्राच्यास्त्रिविटपमिति पठन्ति ।

इत्याचार्यश्रीहेमचन्द्रानुस्मृते शब्दानुशासनेऽवचूरिकायां
तृतीयः पादः ॥



' स्त्रियां नृतोऽस्वस्त्रादेर्ङीः ' । २ । ४ । १ ॥ अतिराज्ञीति–पूजितो राजा स्त्री चेदतिराज्ञीति । " पूजास्वतेः० " इति समासान्तप्रतिषेधः । राजानमतिक्रान्तेत्यपि कृते समासान्तविधेरनित्यत्वमिति काशिका ।

' अधातूदृदितः ' । २ । ४ । २ ॥ गोमदादिशब्दोऽप्युदिदिति–अवयवधर्मेण समुदायोऽपि व्यपदिश्यते–अत्राऽवयव उदित्, तद्धर्मेण समुदायोऽपीत्यर्थः । सुकंस्त्यादि " ईस्मह्तोः " इत्यत्र महत्साहचर्यात् क्विबन्तस्य कंसो न ग्रहणमित्यर्थस्य ज्ञापितत्वादत्र न दीर्घः । प्रत्ययस्योदित्वादिति–अञ्चादेरित्यत्राऽऽवृत्तिव्याख्यानेन तदन्तस्य ग्रहणे सिद्धे यदिदं व्याख्यानं तद्युत्ययन्तरस्याऽपि दर्शनार्थम् । एवं एकस्याऽपि साध्यस्य सिद्ध्यर्थं बह्वयोऽपि युक्तय उपन्यस्यन्ते ।

' अञ्चः ' । २ । ४ । ३ ॥ अञ्च इति कृतनलोपाभावस्य धातुरूपस्याऽञ्चेर्निर्देशस्तेनाऽर्चाविवक्षणे नलोपाभावे तदविवक्षणे लोपेऽपि ङीः सिद्धः । अच इति निर्देशे तु " अच्च् प्राग्दीर्घश्च " इतिवत् कृतनलोपस्यैव स्यात् । इत्थं च प्राञ्चीप्रत्यञ्चीत्यादौ ङीर्नाऽऽगच्छेत् ।

' णस्वराऽघोपाद्वनोरश्च ' । २ । ४ । ४ ॥ ननु 'निरनुबन्धग्रहणे न सानुबन्धकस्य' इति क्वनिप्ड्वनिपोर्ग्रहणं न प्राप्नोति ? उच्यते–'निरनुबन्धग्रहणे क्वचित्सानुबन्धस्य ग्रहणम्' इति न्यायात् न दोषः । वनोऽन्तस्येति–ननु प्रत्ययस्येति सर्वस्याऽपि प्राप्नोति

१ उणा० ५० । २ उणा० ११७ । ३ उणा० ३२९ । ४ उणा० ५३५ । ५ ५–१–१७१ । ६ उणा० ३०७ । ७ ७–३–७३ । ८ १–४–८९ । ९ २–१–१०४ ।

तत्कथमुक्तमन्तस्येति ? सत्यम्, षाद् न् वन् इति कृते भविष्यति। अतिशुनीति-पूजितः श्वाऽतिश्वा स्त्री चेदतिशुनी। नियमार्थमिति-णस्वराघोपादेव वनो ङीर्भवति। तेन सह युध्वेत्यादौ पूर्वेणाऽपि न भवति। विपरीतनियमस्तु "स्त्रियां नृतो०" इत्यस्याऽऽरम्भात् न। विपरीतनियमे हि राज्ञीत्यादौ स्वरात् परस्य नकारस्याऽनवस्थानात् "स्त्रियां नृतो०" इत्यनेन ङीर्न स्यात्।

"वा बहुव्रीहेः" । २ । ४ । ५ ॥ बहुमेरुदृश्वरीति-अन्ये चन्द्रगोम्यादयो "नोपान्त्यवतः" इति प्रतिषेधमिच्छन्तो बहुमेरुदृश्वेत्येव कथयन्ति, स्वमते तु व्यत्यया सूत्रस्य प्रवर्तनान्न निषेधः।

'ऊध्नः' । २ । ४ । ७ ॥ ऊध्नित्यादेश इति-अयमर्थः, यदि समासान्तविधौ, ऊध्नित्यादेशं न कुर्यात् किन्तु न इत्येव तदाऽनो वेत्यनेन विकल्पः स्यान्न तु "स्त्रियां नृतो०" इत्यनेन नित्यं ङीरिति। पञ्चकुण्डोघेति-ननु लुपः पित्वात् "क्यङ्मानि०" इत्यनेन पुंवद्भावः कथं न भवति ? नैवम्, "स्त्रियामूधसोऽन्" इत्यत्र स्त्रियां विषये व्याख्यानात्। विषयव्याख्यानं हि निर्निमित्तत्वार्थम्। ततो यदि पुंवद्भावोऽभिप्रेतः स्यात्तदा ङ्यामूधसोऽनिति सनैमित्तिकमेव कुर्यात्। ननु ङ्यामिति कृते ङीरपि कथम् ? उच्यते-तदा गौरादौ पठ्येत। निमित्तव्याख्याने हि "मूल्यैः क्रीते" इकणि तल्लुपि "ङ्यादे०" इति ङीनिवृत्तौ तन्निमित्तकसमासान्तस्याऽपि निवृत्तिः प्राप्नोति। ततश्च पञ्चकुण्डोधा इति विसर्गान्तं रूपं प्राप्नुयादिति समासान्तविधौ सन्निमित्तक आदेशो नाऽकारि।

'अशिशोः' । २ । ४ । ८ ॥ ननु ऊधन्शब्दस्याऽशिशुशब्दस्य च बहुव्रीहिविशेषणत्वेन समानार्थत्वादेकयोग एव क्रियताम् ? उच्यते-बहुव्रीहावप्यूधन इति तदन्तस्य विधिः, अशिशोरिति च स्वरूपस्येति योगविभागः।

'संख्यादेर्हायनाद्वयसि' । २ । ४ । ९ ॥ इकणि तल्लुपि चेति-"सर्वो-कालेभ्यः" इत्यस्य। शकटाभिप्रायेणेदमुक्तम्। तन्त्रोद्योतस्तु सर्वहायनशब्दस्य काल-वाचकत्वाभावे "तत्र कृत०" इत्यनेनाऽणेच्छति।

'नोपान्त्यवतः' । २ । ४ । १३ ॥ उपान्त्यलोपो नाऽस्तीति-"न वमन्त-संयोगात्" इति निषेधेनेत्यर्थः। स्त्रियां नृत इत्यस्यापीति-अन्यथाऽनोऽनुपान्त्य-वतो वेत्येकयोगः क्रियेत। अतिपर्वणीत्यत्र अव्युत्पत्तिपक्षाश्रयणात् "गस्वैराघोषा०"

१ २-४-३ । २ १-४-१३ । ३ १-२-५० । ४ ७-३-१६६ । ५ १-४-१५० । ६ २-४-१५ । ७ ६-३-८० । ८ ६-३-१४ । ९ १-१-१११ । १० २-४-४ ।

भावयोराकारश्रुतेस्तथैव विद्यमानत्वात् किं तदभावेन विनश्यतीति ? उच्यते-आपि सति " दीर्घङ्याप्० " इति सेर्लोपः स्याचथा सोमपः कन्याः पश्येत्यत्र " लुगातोऽनापः " इति शसि लुक् स्यात् ।

' गौरादिभ्यो मुख्यान्ङीः ' । २ । ४ । ११ ॥ कवेः शिवेरपत्यं कुर्वादिदुनादीति ञ्ये काव्य शैव्यस्ततो ङ्यां " व्यङ्जनात्तद्धितस्य० " इति यलोपे भावे कावी शैवी । अनड्वाहीभार्य इति अत्राऽनड्वाहीशब्दो व्यक्तौ प्रवर्तितो जातिवाचित्वे तु " स्त्र्योऽङ्गाद् स्त्री० " इत्यनेनैव पुंवन्निषेधः सिद्धः । ननु तथापि पृथिवीशब्दस्याऽग्रहायणीशब्दस्य च स्वतः स्त्रीत्वा " परतः स्त्री० " इति पुंवद्भावो न भविष्यति किमर्थमनयोस्तथा पाठः ? उच्यते-नहि सप्रत्ययपाठस्य पुंवद्भावप्रतिषेध एव प्रयोजनं किन्तु तद्धितलोपे लुगभावोऽपि । तत्र क्वचिद्वयं क्वचिदेकं यथासम्भवमूहनीयं ।

' अणञेयेकण्नञ्स्नञ्टिताम् ' । २ । ४ । २० ॥ काण्डान् लविष्यामीति काण्डलावी " कर्मणोऽण् " पाणिनीयमिति-पणनं पणः " पणेर्माने " अल् सोऽस्याऽस्ति पणी तस्यापत्यं वृद्धं " इतोऽपत्ये " अण् पाणिनस्याऽपत्यं युवा " अत इञ् " । पाणिनिना प्रोक्तं " तेन प्रोक्ते " इति विषये " यूनि लुप् " इति इञो लुप्, अन्यथा " वृद्धेऽञः " इति स्याचतो दोरीयः । बहुकुम्भकारा नगरीति-अत्र बहवः कुम्भकारा यस्यामिति कार्यम् । यदा तु बह्व्यः कुम्भकार्यो यस्यामिति क्रियते, तदा " नैकस्यादितः " इति क्वचि बहुकुम्भकारीकेति भवति ।

' वयस्यनन्त्ये ' । २ । ४ । २१ ॥ द्विवर्षा इत्यादि-द्वे वर्षे भूता " भैक्षादि भूते " इस्यः । उत्तानशयेति-उत्तानः शेते " शीङोऽधिभ्याः० " अः ।

' द्विगोः समाहारात् ' । २ । ४ । २२ ॥ सम्यगाहरणमेकीकरणं समाहारः । समाहारद्विगुसंज्ञेति-समाहारविशेषितेन द्विगुना नाम विशिष्यते । अयमर्थः-समाहृतं विना पञ्च रात्रयः प्रिया अस्य पञ्चरात्रप्रिय इत्यादावपि स्त्रीः स्यात् । ननु समाहृतं विना पञ्च रात्रयः ... द्वन्द्वसमाहारस्य द्वन्द्वैकत्वेति नपुंसकत्वविधानेन स्त्रीत्वाभावात् समाहार इत्युक्तेऽपि द्विगोः समाहारादिति लप्स्यते किं द्विगुग्रहणेन ? अयोचरार्थमित्यपि न वाच्यम् । तद्धितलुकीति करणात्, नैवम्; समाहारादित्युक्तौ समाहारान्तात् नाम्न इत्याद्युक्ते । ततश्च वाक्त्वचमतिक्रान्ता अतिवाक्त्वचीति स्यात् । इष्टं चाऽतिवाक्त्वचेति ।

१ ६-४-४५ । २ २-१-१०७ । ३ ३-४-८८ । ४ ३-२-५६ । ५ ६-३-४२ । ६ ५-१-७२ । ७ ५-२-११ । ८ ६-३-३८ । ९ ६-३-३४ । १० ६-१-१४१ । ११ ६-१-११७ । १२ ६-३-२८ । १३ ७-३-१०१ । १४ ६-४-१११ । १५ ५-३-११६ ।

अर्थकथनमिदं प्रवृद्धश्चाऽसौ विलूनश्च स्त्रीचेदिति तु कार्यं, अन्यथा गौणत्वाभावाद् " गोश्चाऽन्ते० " इत्यप्रवृत्तौ विलूनशब्दस्याऽकारान्तस्याऽभावाद् ङीर्न स्यात् ।

' केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजात् ' । २ । ४ । २९ ॥ केवलीति–केव्यते सेव्यते केवलिभिरिति " मृदिकन्दिकुण्डि० " इत्यलः । मामकशब्दादिति–ननु कथं मामकग्रहणं नियमार्थं शोभनो मामकोऽस्याः सुमामके-त्यत्र तदन्तविधेरिष्टत्वाद्विध्यर्थताऽप्युपपद्यत एव । विधिनियमसम्भवे हि विधिरेव ज्यायस्त्वात् । सत्यामपि वा नियमार्थतायां विपरीतनियमः कस्मान्न भवति । मामक-शब्दस्यैव नाम्नीति ? अत्रोच्यते–इह प्रकरणे तदन्तविधेरिष्टत्वेऽपि मुख्याधिकाराद-मुख्यमामकशब्दान्तान्न ङीः । केवलैरेव चैतैः संज्ञाप्रतीतिर्न त्वमुख्यतदन्तैः । अत एव केवला एव केवलादय उदाहृता न कृतसमासा इत्युपपद्यत एव नियमार्थता । विपरीतनियमोऽपि न भवति । तथाहि–केवलादीनामपि संज्ञायां ङीर्निवर्तितः स्यात् । वचनारम्भसामर्थ्यात् संज्ञाऽपि बोध्यतेति तेषां वैषम्यं स्यात् । यथोक्तनियमे तु न किञ्चिन्नोपपद्यत इति । अपरीति–पिपर्तीत्यचि परस्तस्य समासेऽपरी । भेषजीति–'भेपृ-ग् ' भये, घञि भेषं जयति " क्वचित् " इति डे ।

' भाजगोणनागस्थलकुण्डकालकुशकामुककटकपरात् पक्वावपन-स्थूलाकृत्रिमामत्रकृष्णायसीरिरंसुश्रोणिकेशपाशे ' । २ । ४ । ३० ॥ कुण्डीति, इह कुण्डशब्दस्य ङीविधानं विस्पष्टार्थमेव । जातिवचनात् " जातेः० " इत्यनेनैव सिद्धत्वात् । कुशान्येति–काष्ठमयी तदाऽऽकृतिर्वेलाया । नागेति–न अगः "नखादयः" ।

' नवा शोणादेः ' । २ । ४ । ३१ ॥ चण्डीति–कोपनायामन्ते न विकल्पो गौर्यां तु गौरादिपाठात् नित्यं ङीः । अरालशब्दो वक्रार्थोऽत्र द्रष्टव्यः, पक्षिविशेषे तु गौरादौ । मरोर्भ्रंशेर्जातो मरुज ऋषिविशेषो मरूजेति तु पाठान्तरम्, ' भृजैद् ' भर्जने, णिगन्वा-भरोर्भ्रंशेर्जातो मरुज ऋषिविशेषो ... दधि । अत एव पाठाद् रेफात् परतो दीर्घ ऊकारागमे मरूजाः स्नेहसृष्टाः किल तण्डुलाः । वृत्रघ्नीति–केवलस्य हन्शब्दस्याऽप्रयोगाच्चदन्तमुदाहरति ।

' इतोऽक्त्यर्थात् ' । २ । ४ । ३२ ॥ अग्नतेर्भार्या, अभेदोपचारेणाऽग्नतीति अग्निभार्या अप्राप्तमपि धवयोगात् स्त्रीत्वम् । अङ्कतिरांगुर्मध्याऽग्निस्तेषां भार्याऽभेदोप-चारेण अङ्कती । कथमिति–अत्राऽपि क्तिप्रत्ययोऽस्तीत्याशङ्कार्थः । अन्येत्विति–पाणिनेः पूर्वे । 'ननु कृदन्तेषा उणादय' इति न्यायात् कृदन्तेभ्यश्चेत्यनेनैवाऽग्नति प्रभृती-

---

१ २-४-२६ । २ उणा. ४६५ । ३ ५-१-१०१ । ४ २-४-५४ । ५ १-१-११८ ।

ां ङीर्भविष्यति, किं तेषां पृथगुपादानेन ? सत्यम्, तन्मते उणादीनामव्यु-
ोण्यन्तानामेव भवति; तेनाऽणीत्यदित्यादिषु ङीर्न भवति ।

द्गतेः' । २ । ४ । ३३ ॥ पादाभ्यां हन्यते "क्रोडादिभ्यः", "द्विमेदति०"
।

र्फेः शास्त्रे' । २ । ४ । ३४ । ३३ ॥ अक्तिशब्दस्य तपन्तत्वादत्यर्थत्वादिति
ाप्ते शस्त्रवाचिनो विकल्प आरभ्यत एव ।

सराद्युतो गुणादखरो' । २ । ४ । ३५ ॥ अयं कार्यमभ्यवद्युत इत्या-
ायोगाद्योपचाराद्गुणवचनः शब्दो गुण इत्युच्यते । खीरत्वायोगादिति-उक्ता-
ुरत्वविधानादिरयर्थः । यद्यपि महत्त्वरूपस्याऽऽकारगुणस्याऽपैतीति विशेषणं
तथाप्याश्रादिस्थितनीलादिगुणस्य घटमानकं सर्वस्याऽपि विशेषणं भवति; यच्चिद्रोश्चन्द्रक इति विशेषणं चिह्नं कृतं चन्द्रकोऽयं गौरिति, यथादुगोस्-
न्द्रकोऽयमित्युच्यते तथाऽत्राऽपि भविष्यति ।

यतैतहरितभरतरोहिताद् वर्णात्तो नश्च' । २ । ४ । ३६ ॥ वाऽधिकार-
द् प्रत्ययविधिनैन सम्बध्यते ।

ासहनञ्विद्यमानपूर्वपदास्स्वाङ्गादक्रोडादिभ्यः' । २ । ४ । ३८ ॥
द्यमानशब्दानां पूर्वपदरूपाणां वर्जनात् मध्यपदेन स्वाङ्गस्य व्यवधानेऽपि
ो यथा विद्यमानं कल्याणं मुखं यस्याः सा विद्यमानकल्याणमुखेति ।

ासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात्' । २ । ४ । ३९ ॥
केति-सहस्य सो विकल्पेन भवतीत्यत्र न ।

खमुखादनाम्नि' । २ । ४ । ४० ॥ संज्ञाशब्दा एते इति, न [illegible]
इत्यर्थः ।

ुच्छात्' । २ । ४ । ४१ ॥ नासिकादिनियमात् निवृत्तौ वचनम्, यद्येवं
दे सूत्र एव कुतो न पठ्यते ?, किमर्थं पृथगुद्दिश्यत इति ?; उच्यते-पुच्छादि-
सत्राऽनुवृत्त्यर्थम् ।

कबरमणिविषशरादेः' । २ । ४ । ४२ । "न सप्तमीन्द्वादिभ्यश्च" इत्य-
ापुच्छीत्यादिषु मण्यादिशब्दानां पूर्वनिपातः ।

-१-१२ । २ ३-२-५६ । ३ ३-१-१५५ ।

'पक्षाच्चोपमादेः' । २ । ४ । ४३ ॥ [1]"कबरमणिविषशरादेः" पक्षाच्चोपमादेस्तु इत्येकयोगाकरणात् स्वाङ्गादिति निवृत्तम् । उलूकस्येव पक्षावस्या इति–अत्र उलूकशब्द उलूकपक्षे उलूकपुच्छे च वर्तते । यथोष्ट्रमुखे उष्ट्रशब्दः, अतश्चोलूकशब्द उपमानं भवतीत्युलूकः इव पक्षावस्या इत्यादिविग्रहः । उलूकस्येव पक्षावित्यादि त्वर्थकथनम् ।

'क्रीतात्करणादेः' । २ । ४ । ४४ ॥ केचिच्चिति–तन्मतेऽपि प्रत्ययोत्पत्तेः प्रागिति समासो बहुलाधिकाराल्लभ्यते । मन्मतेऽपि बहुलाधिकाराश्रयणात्तथैव ।

'क्तादल्पे' । २ । ४ । ४५ ॥ अभ्रविलिप्तीति–पूर्वपदस्य क्तान्तेन समासः । सूपविलिप्तीति–क्तान्तेऽल्पार्थस्य गम्यमानत्वादल्पशब्दस्याऽप्रयोगः ।

'स्वाङ्गादेरकृतमितजातप्रतिपन्नाद् बहुव्रीहेः' । २ । ४ । ४६ ॥ पूर्वबत्पारिभाषिकं स्वाङ्गम् । क्तान्ताद्बहुव्रीहेरिति–कृतादिवर्जितो यः क्तान्तोविशेषणमिति न्यायात् सोऽन्ते यस्य बहुव्रीहेः । हस्ताभ्यां पतितेति–कार्यमन्यथाऽदन्तत्वाभावेनैव ङीप्राप्तिर्नाऽस्ति ।

'अनाच्छादजात्यादेर्नवा' । २ । ४ । ४७ ॥ मासयातेत्यादिषु–माससंवत्सरशब्दयोः कालवचनत्वाद्बहुसुखदुःखानां च गुणवचनत्वाज्जलस्वभाववचनत्वाद्जात्यादेरिति व्यावृत्त्या निषिध्यते ।

'पत्युर्नः' । २ । ४ । ४८ ॥ पत्युरिति पञ्चम्यन्तमधिकृतस्य बहुव्रीहेर्विशेषणं तेन च तदन्तविधिरित्याह–पत्यन्तादिति । बहुस्थूलपतिः पुरीति–स्थूलाः पतयो यासां ताः स्थूलपतय इति कृते पत्युर्न इति न विकल्पनाद्बहवः स्थूलपतयो यस्याम् । मुख्यो न भवतीति–द्वितीयेन बहुव्रीहिणा बाधितत्वात् । पत्यन्तो न भवतीति–किं तर्हि ? स्थूलपत्यन्तः ।

'सादेः' । २ । ४ । ४९ ॥ सह विद्यमानवचनो, न तु तुल्ययोगवचनः सपत्न्यादाविति निर्देशात् । तुल्ययोगे हि पूर्वेण सहेन सह पतिशब्दस्य नकारो न भवति यत्रार्थे सपत्नीति निर्देशो न स्यात् । ननु सादेः पत्युर्न इत्येकयोगो विधीयतां सादित्वेन बहुव्रीहावपि अन्यस्मिन् वा भविष्यति ? नैवम्, मुख्यादित्यधिकाराद् सादावेव स्यान्न तु बहुव्रीहौ । पृथग्योगे तु पूर्वसूत्रे मुख्यादिति बहुव्रीहिसमासस्यैव विशेषणं न पत्युः ।

'सपत्न्यादौ' । २ । ४ । ५० ॥ समानार्थमिति–धर्मादिषु पत्नीशब्दस्याऽ-

---

[1] २-४-४२ ।

पाठादित्यर्थः । पुंवद्भावप्रतिषेधार्थं चेति–" परेतः स्त्री० " इति " जातिश्च णि० " इति च प्राप्तस्य ।

'पाणिगृहीतीति' । २ । ४ । ५१ ॥ पाणिगृहीतीति–इति–प्रकारो येषां ते तथा जस् छन्दत्वात् लुप् ।

'पतिवत्न्यन्तर्वत्न्यौ भार्यागर्भिण्योः' । २ । ४ । ५३ ॥ अधिकरणप्रधानादपीति–"तदस्याऽस्त्यस्मिन्०" इत्यत्र तदिति प्रथमान्ताद्विहितत्वेनाऽप्राप्त इत्यर्थः ।

'जातेरयान्तनित्यस्त्रीशूद्रात्' । २ । ४ । ५४ ॥ जातिः सामान्यमभिन्नबुद्धिध्वनिप्रसवनिबन्धनमर्थस्तत्र च कार्यासम्भवात्तद्वाचिनो ग्रहणमित्याह–जातिवाचिन इति । सकृदुपदेशव्यङ्ग्यत्वे इति–उभयोरपि सम्बध्यते । पाक्षीति–अव्युत्पन्नोऽयं " हुयामा० " इति मप्रत्ययान्तो वा । मन्नन्तस्य तु डिद्वारा ङीः सिद्ध एव । ब्राह्मणीति–अयमप्यव्युत्पन्नः विक्षणोति निपातो वा । ब्रह्म अणति कर्मणोऽणि पृषोदरादिनिपाते, अपत्याणि वाऽणन्तत्वाद् ङीः सिद्ध एव । बह्वृचीति–" नोऽपदिचादी " इत्यनेन न पुंवन्निषेधः । तत्र पूरणप्रत्ययान्तस्य ग्रहणात् । यद्यपि कठाद्योऽपि ब्राह्मणविशेषास्तथापि कठादीनामत्रिलिङ्गत्वं न, यथा कठेन प्रोक्तं वेत्यधीते वा कठं ब्राह्मणकुलमिति तुर्ये जातिलक्षणं विधेयमेव । कुटीति–मतान्तरेण कुटीशब्दस्य नित्यस्त्रीत्वं स्वमते तु ' गृहे कुटः ' इति लक्षणेन पुंस्त्रीत्वमिति, मतान्तरेणेदं दर्शितम् । कथं सुपर्णीति–सुपर्णशब्दस्यैव जातित्वं तस्य च कृते समासे मुख्यत्वमित्यभिप्रायः ।

'पाककर्णपर्णवालान्तात्' । २ । ४ । ५५ ॥ आखुकर्णीति–आखोः कर्ण इव कर्णपत्रं यस्याः । ' सल ' गतौ सल्यत इति घञि सालो दन्त्यादिः ।

'असत्काण्डप्रान्तशतैकाजिनैकशाणपिण्डात् फलात्' । २ । ४ । ५७ ॥ पिण्डफलेति–पिण्डाकाराणि फलान्यस्याः, पिण्डफला कटुतुम्बी । यदिषण्डुः–" कटुकालाबुती तुम्बी, लम्बा पिण्डफला तथा । "

'धवाद्योगादपालकान्तात्' । २ । ४ । ५९ ॥ सम्बन्धादिति–सम्बन्धश्च सम्बन्धिनमपेक्षते, स च प्रत्यासन्नत्वाद्धवस्यैव विज्ञायते, तेन धवेन स्त्रियाः सम्बन्धादित्यर्थः । कौमारीति–कुमार्येव प्रतीयते । योगात् सोऽयमिति–अत्र सोऽयमित्यभिसम्बन्धेन वृत्तिर्नेदितव्या । न ह्ययमेवाऽभिसम्बन्धस्तस्येदमिति, किन्तु सोऽयमित्यपि।

१ ३-२-४९ । २ ३-२-५१ । ३ ७-२-१ । ४ उणा० ४५१ । ५ ३-२-५२ । ६ लिङ्गा० स्त्रीपुंस प्रक० श्लो. २ ।

अभेदाच्च भेदस्य निवृत्तत्वात् तद्धितानुपपत्तिः । व्यतिरेकविवक्षेति-षष्ठ्यस्येयमिति भेदविवक्षेत्यर्थः ।

'पूतक्रतुवृषाकप्यग्निकुसितकुसीदादै च' । २ । ४ । ६० ॥ ननु कुसिदादै चेति-पञ्चमीनिर्देशादैकारः प्रत्यय एव विज्ञायते । ततश्च ङीः, ऐकारश्चप्रत्ययौ भवत इति सूत्रार्थः कथं न लभ्यते ?, कथमुक्तमैकारश्चाऽन्तादेश इति ?, नैष दोषः; "पंचेऽप्रायी" इति निर्देशात् । न ह्यैकारस्य प्रत्ययत्वेऽथायीति भवति । वृषो धर्मः कपिर्वंशः हस्तादूर्ध्वात् पृषोदरादित्वाद्दीर्घे वृषाकपिः । वृषं दानवमाकम्पितवान् वा, "अभिकुण्डि०" इति इः ।

'मनोरौ च वा' । २ । ४ । ६१ । प्रत्ययसंनियोगार्थश्चकारोऽनुवर्तते । वा शब्दः प्रथमं विधेयतया प्रधानेन ङीप्रत्ययेन सम्बध्यते, न त्वौकारेण तत्संनियोगविधानेनाऽप्रधानत्वादिति ।

'वरुणेन्द्ररुद्रभवशर्वमृडादान् चान्तः' । २ । ४ । ६२ ॥ आनन्त आगमो भवतीति-आनितिदीर्घोच्चारणं मतभङ्गार्थम् । अन्तग्रहणाभावे तु आनपि भिन्नप्रत्ययः स्यात् । किञ्चाऽन्तग्रहणाभावे "अनेकवर्णः सर्वस्य" इति स्यात् ।

'सूर्योद्देवतायां वा' । २ । ४ । ६४ ॥ सूर्यस्याऽऽदित्यस्येति-यथा कुन्ती ।

'यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे' । २ । ४ । ६५ ॥ यौतेरचि यवः नन्द्यादित्वादने च यवनः । धवायोगादिति च निवृत्तमिति-दोषाद्यर्थविशेषोपादानादिति शेषः, उरुमहत्त्वयोरेकार्थत्वेऽपि पृथगुपादानं यथासंख्यार्थम् । अण् न भवतीति-तद्विषये ङीविधानादित्यर्थः ।

'यत्नो डायन् च वा' । २ । ४ । ६७ ॥ डायन् चेत्यत्र ङित्करणमात्सुरायणीत्यत्र प्रयोजनार्थम् । डायन् चान्तो वा भवतीति-साक्षान्निर्दिष्टस्य डायन एव वाशब्देन सम्बन्धो नानुमितेन ङीप्रत्ययेन प्रत्यासत्तेः । पावटाद्वेति सूत्रकरणाद् वा ।

'लोहितादिशकलान्तात्' । २ । ४ । ६८ ॥ कायतेः "पुंपिश्रि०" इति कित्यत आकारलोपे च क्तः ।

'पावटाद्वा' । २ । ४ । ६९ ॥ अत्र ङीडायनोरुभयोरनुवर्तनात् प्राधान्याद् ङीप्रत्ययेनैव वाशब्दस्य सम्बन्धो नाऽन्वाचीयमानेन डायनेत्याह-स्त्रियां वा ङीर्भवति ।

---

१ ३-२-५१ । २ उणा० ६१४ । ३ ७-४-१-७ । ४ उणा० १०८ ।

यद्यप्ययं गुणवचनस्तथापि नाऽनेकवर्णव्यवहितः स्वरात् पर उकार इति " स्वरादुतो० " इत्यमनुष्यजातित्वादप्राणिजातित्वाभावाच्च " उतोऽप्राणिन० " इति चाऽप्राप्तेऽने-नोङ् । यदा श्वशुरशब्दः संज्ञाशब्दस्तदाऽऽपि श्वशुरा इत्येव भवति ।

' यूनस्तिः ' । २ । ४ । ७७ ॥ युवतिरित्यत्र ङीरिति 'जातिग्रहणे सकृद्बाधित' इति न्यायात् पश्चात् " ङ्यादोऽन्त्यर्थात् " इत्यपि न ।

' अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्त्यस्य ष्यः ' । २ । ४ । ७८ ॥ अन्तस्य ष्य इति–अणन्तमिञन्तं च बहुस्वरं नाम निर्दिष्टमिति निर्दिश्यमानानामिति न्यायेन सकलस्याऽप्यादेशे प्राप्तेऽन्तग्रहणं, उत्तरार्थं च तेन " क्रोडसुतयोः० " इत्यत्र " अनेकवर्णः सर्वस्य " इति न्यायात् न सर्वयोर्भोजसुतयोः ष्यादेशः । दैवदत्त्येति–शब्द-शक्तिस्वाभाव्यात् ष्यादेश आबन्तसहित एव स्त्रीलिङ्गमभिव्यनक्ति । एवं कारिषगन्ध्ये-त्यपि । कान्यकुब्जीत्यत्र–कन्या कुब्जा यत्रेति " ङ्यापो बहुलं० " इति ह्रस्वः । यद्वा कन्याशब्दं केचित्परतः स्त्रीलिङ्गं मन्यन्ते । आर्तभागीति–ननु च ऋषिवचन एवाऽप-त्यमागशब्दस्तत्राऽनार्षत्वमपि नाऽस्तीति द्व्यङ्गविकलत्वम्, सत्यम्; शास्त्रेऽस्मिन् प्रदेशान्तरेऽपि ऋषिश्रुत्या विहित " ऋषिवृष्ण्यन्धक० " इति प्रत्यय आर्ष इति रूढः । अयं तु बिदादिभ्य इत्येवं विहितत्वादनार्ष इति प्रत्युदाह्रियते । बहुकारिषगन्धा निर्धाराहिरित्यत्राऽणिञन्तस्य स्त्रीवृत्तित्वेऽपि मुख्याधिकाराचस्याऽन्यपदार्थे गुणीभूत-त्वेन मुख्यत्वाभावान्न भवति । नन्वेते ङ्यावादयः स्त्रीप्रत्ययाः स्त्रीत्वस्य द्योतका न तु वाचकास्तत्र यथा विद्युदादयः शब्दाः स्त्रीप्रत्ययमन्तरेण स्वमहिम्नैव स्त्रीत्वं प्रति-पादयन्ति, तथा खट्वादयोऽपि प्रतिपादयिष्यन्ति; किमेभ्यः स्त्रीप्रत्ययविधानतः ? उच्यते–विचित्रशक्तयो हि भावा भवन्ति । तत्र यथा घनतरतिमिरनिकरनिरुद्धपदार्थ-सार्थेऽपि निशीथे गगनतलप्रसृमरांशुरचिरांशुरितरनिरपेक्षयैवाऽऽत्मानं प्रकाशयति । न चैवं स्तम्भादयस्तेऽपि चाऽस्मदादीनां प्रदीपादिप्रकाशकमपेक्षा आत्मानं प्रका-शयन्त्येव । संश्लिष्टानां तु प्रदीपादिनिरपेक्षा एव । यथा वा सूर्योपलश्चण्डच-ण्डांशुकरनिकरसम्पर्कसमासादितमाहात्म्यः स्वयं शीतोऽपि सान्तरमधःस्थितं दारु दहति न तु प्रत्यासन्नं प्रत्युत तत्र शैत्यमुपदर्शयति । तथा शब्दा अपि शक्ति-वैचित्र्यात् क्वचित्पदत्वेन पदान्तरसापेक्षया पदान्तरानपेक्षेण च स्त्रीत्वं प्रतिपाद-यन्ति । तत्र पदान्तरसापेक्षेण यथेयं गौरित्यादि । अत्र गवाद्यर्थस्योभयलिङ्ग-त्वादियमिति पदान्तरापेक्षेण गवादिशब्देन स्त्रीत्वं प्रतिपाद्यते । तस्य स्त्रीत्वाप्रति-पादने द्वयमिति न स्यात् । पदान्तरानपेक्षेण नाममात्रेणाऽऽदेशप्रत्ययाभ्यां च ।

१ ३-४-१५। २ २-४-७१। ३ २-४-१२। ४ २-४-८१। ५ १-४-३३। ६ १-१-११।

तत्र नाममात्रेण यथा स्वमादुहितेत्यादयः । अत्र नाममात्रमेव स्त्रीत्वप्रतिपत्तौ समर्थमिति स्त्रीप्रत्ययाभावः । आदेशेन सप्रत्ययेनाऽप्रत्ययेन च, सप्रत्ययेन क्रोष्ट्री कारिषगन्ध्येति; अप्रत्ययेन तिस्रश्चतस्र इति, प्रत्ययेनैकेनाऽनेकेन च, तत्रैकेन राज्ञी खट्वेति, अनेकेन सान्तरेण निरन्तरेण सान्तरनिरन्तरेण च, सान्तरेण कालितरा हरिणितरेति, निरन्तरेण आर्याणी भवानी, सान्तरनिरन्तरेण आर्याणितरा भवानितरेति । तदेवमनेकप्रकाराणां लिङ्गप्रतिपत्तौ नैकः प्रकारः शक्यो नियन्तुम् । शब्दशक्तिस्वाभाव्यात् ।

' कुलाख्यानाम् ' । २ । ४ । ७९ ॥ गौरादित्वात्तु भौरिकी–भौलिकी । अपमर्थः–प्रथममनेन प्राप्तावस्य बाधनार्थं गौरादौ पाठः । ततस्तत्र पाठाद् ङीरेव केवलो मा भूदिति क्रौड्यादौ पाठः ।

' भोजसूतयोः क्षत्रियायुवत्योः ' । २ । ४ । ८१ ॥ जातेरिति ङीप्रत्ययापवादोऽनेन ष्यादेशः ।

' दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धेर्वा ' । २ । ४ । ८२ ॥ दैवयज्ञेति, देव एव यज्ञः पूजनीयो यस्य स तथा । सात्यमुग्र्येति सत्यमुग्रं यस्याऽसौ सत्यमुग्रः अत एव निर्देशात् मोन्तः । मान्तमव्ययं वा । सत्यमुग्रं रातीति वा डे । काण्ठेविद्धेति–यदा कण्ठे विध्यते सा तदा " तत्पुरुषे कृति " इत्यलुप् । यदा तु कण्ठे विद्धमनेन तदा " अमूर्धमस्तकात्० " इत्यलुप् ।

' ष्यापुत्रपत्योः केवलयोरीच् तत्पुरुषे ' । २ । ४ । ८३ ॥ ष्याशब्दादीर्घङ्याप् पुत्रत्याद्रा सेर्लुप् । पुत्रपत्योरित्यत्र सौत्रनिर्देशात् " राजदन्ता० " इति पतिशब्दस्य न पूर्वनिपातः ।

' अस्य ङ्यां लुक् ' । २ । ४ । ८६ ॥ ईत्रधिकारे समानदीर्घत्वेनैव प्रयोगजातं सेत्स्यति किं लुग्ग्रहणेन ? सत्यम्, यदा पञ्चभिः क्रीत इति इकणो लुपि 'उभयोः स्थाने' इति न्यायादीचोऽपि ङीव्यपदेशे ङीनिवृत्तौ व्यञ्जनान्तता ईज्व्यपदेशे स्वीकारान्तता मा भूदिति लुग्ग्रहणम् ।

'मत्स्यस्य यः' । २ । ४ । ८७ ॥ मत्सीति–ननु ङ्यामिति–"सप्तम्या निर्दिष्टे पूर्वस्य" तत्रानन्तरस्येति न्यायात् मत्सीत्यत्र " स्वरस्य परे प्राग्विधौ " इत्यकारलुचः स्थानिवद्भावाद् ङ्यां निमित्ते यकारासम्भवात् कथं लुगिति ? नैवम्, वचनादेकेन

१ १-१-२० । २ ३-२-२१ । ३ ३-१-१६० । ४ ७-४-११० ।

वर्णेन व्यवधानमाश्रीयते । ननु भवत्वेवं परं मत्स्यस्येयं "तस्येदम्" इत्यणि मत्स्याकारलोपेऽणन्तत्वाद् ङ्याम स्य ङ्यामित्यणोऽकारलोपे द्वयोरकारयोः स्थानिवद्भावात् मात्सीत्यत्र यलुग् न प्राप्नोति, नैवम्; " नै सन्धि० " इति स्थानिवद्भावप्रतिषेधात्, प्रथमपक्षे तु " नै सन्धि० " इत्यस्य चिन्ताऽपि न कृता । उत्तरान्तरेणैव सिद्धत्वात् ।

'व्यञ्जनात्तद्धितस्य' । २ । ४ । ८८ ॥ तद्धितस्येत्यत्र-तद्धितसम्बन्धिनो यकारस्येति वैयधिकरण्ये षष्ठी । यकारस्य किंविशिष्टस्य तद्धितस्य ? तद्धितरूपस्येति तु सामानाधिकरण्ये सामिधेनीत्यादौ न स्यात् । औचितीति-उचच् समवाये उच्यति समवैति प्रकृतैः स्वभावैः " भ्रुविद्भ्वपि० " इति किदितः । वैश्यीति-येषां मते विशोऽपत्यमिति वैश्यः शब्दः साध्यते, तन्मते-यलोपः प्राप्नोत्येव ।

'आपत्यस्य क्यच्च्व्योः' । २ । ४ । ९१ ॥ अपत्ये भव आपत्यस्तस्य स्थानसम्बन्धिषष्ठी । गार्गीयतीति-'येन नाऽव्यवधानमिति' न्यायादीकाराऽकारादिना व्यवहितस्याऽपि यस्य लुक् । गार्गायते इति-यदा गार्ग्य इवाऽऽचरति कर्तुः क्विपि तल्लुपि ते प्रत्यये " क्यः शिति " इति क्य आनीयते तदाऽनेन यलोपो न भवति । क्वि साहचर्यात्, यतश्विर्नाम्न एव सम्भवति ततः क्योऽपि नाम्न एव परतो विहितो गृह्यतेऽयं तु नामधातोरिति ।

'तद्धितयस्वरेऽनाति' । २ । ४ । ९२ ॥ गार्गकमिति-गर्गस्याऽपत्यानि यञ् तस्य च " नै प्राग्जितीये० " इत्यनेन निषेधाद् " यञञोऽश्यापर्णान्त० " इति न लुप् । ततो गर्गाणां समूहो गार्गकं गोत्रोक्षाकञ् । गार्गीय इति-गार्ग्यस्याऽयं शिष्यश्चेदन्यथा " गोत्रोदवद्म० " इत्यकञ् स्यात् ।

'बिल्वकीयादेरीयस्य' । २ । ४ । ९३ ॥ ननु बिल्वकीयादयो द्विधा केचिन्नडादेः कीये सति, अपरे कुत्सितावार्थकप्रत्ययान्तादीये सति तत्केषामिह ग्रहणं ? उच्यते-आदिशब्दस्य व्यवस्थावाचित्वादित्याह-नडादिष्वित्यादि । बिल्वा वेणवो वेत्राणि वेतमाः स्वपस्तक्षाण इक्षवः काष्ठानि कपोताः कुञ्चाः सन्त्यस्यामिति विग्रहे नडादेः कीयः । " आत् " इत्याप् ततो भवार्थेऽण् । काष्ठकीया इत्यत्र तु काष्ठकीयशब्दः कच्छादौ द्रष्टव्यः, ततः कच्छादिपाठात् कोपान्त्याच्चाऽण्; अन्यथा "रोपीयेः" स्यात् । क्रौञ्चका इति-कुञ्चाशब्दस्य कीये नडादिपाठाद् ह्रस्वः । कुञ्चकीयायां भवाः । नन्वत्र ईयग्रहणं किमर्थं बिल्वकीयादेरित्येव क्रियतामेवमपि कृते बैल्वका इत्यादीन्यपि

१ ६-२-१६० । २ ७-४-१११ । ३ तथा० ६१६ । ४ ३-४-७० । ५ ६-१-११५ ।
६ ६-१-१२६ । ७ ६-२-१६६ । ८ २-४-१८ । ९ ६-१-३२ ।

" अपर्णेवर्णस्य " इति ईकाराकारलोपे ततो विनाकीपादेशित्यनेनाऽधिकारागतस्य यकारमात्रस्य लोपे पुनः " अपर्णेवर्णस्य " इति ईकारलोपे विनाकीपादेशित्यनेन यकारलोपे कर्तव्ये " ऐकारस्य० " इति परिभाषयाऽकारलोपस्य स्थानित्वम् । " नै पदान्त० " इति परिषेधो स्थानित्वनिरासात् ? सत्यम्, परिषेधो स्थानित्वनिषेधेऽपि ईकारलोपे स्थानित्वमस्त्येवेति ईकारग्रहणम् । ननु तर्हि विनाकीपादेशित्येनैव क्रियताम् ? एवं कृते यकाराधिकारे पुनर्यत् ग्रहणं करोति तदेवं ज्ञापयत्यत्र सवर्णस्यैव यस्य लुक्, सस्वरयलोपे च स्वरूपअनसमुदायत्वात् " स्वेरस्य० " इति स्थानित्वाभावे गर्ग भविष्यति, सत्यम्; एवं कृते प्रवाऽप्याशङ्का स्यादनेन यकारलोपे ईकारस्य लुग्भवतीति । यद्वा-कारलोपोऽपि सम्मतः स्यात्तदा ईगस्येति कुर्यादिति ।

' इयादेर्गौणस्याकिपस्तद्धितलुक्यगोणीसूच्योः ' । २ । ४ । ९५ ॥ लुगिति-लुप एवोपलक्षणं तेनाऽगोमती गोमतीभूता गोमतीभूतेऽस्यत्र लोपाभावेऽपि लुबभावात् ङीनिवृत्तेरभावः ।

' गोश्चाऽन्ते ह्रस्वोऽनंशिसमासेयो बहुव्रीहौ ' । २ । ४ । ९६ ॥ अंशिसमासवर्जनात् समासस्याऽन्त एव ह्रस्वः । ननर्थपिप्पलीति-अनंशिसमासेयो बहुव्रीहाविति व्याप्तौ किमिति दर्शितम् । यतो ह्रस्वे कृतेऽपि 'परलिङ्गो द्वन्द्वोंऽशीति' वचनात् पिप्पलीलिङ्गे "इतोऽक्त्यर्थात्०" इति ङ्यां रूपं तथैव, सत्यम्; इतोऽक्त्यर्थादिति वैकल्पिको ङीः ततोऽर्धपिप्पलिरर्धपिप्पलीति रूपद्वयं स्यादिष्यते चार्धपिप्पलीत्येव । ननु तर्हि तुर्यभिक्षेति किमर्थं दर्शितम् ? यतोऽत्रापि 'परलिङ्गो द्वन्द्वोंऽशीति' वचनात् भिक्षेत्युत्तरपदस्य स्त्रीत्वे ह्रस्वत्वे कृतेऽपि पुनरापि सति तुर्यभिक्षमतिक्रान्तो यः सोऽतितुर्यभिक्ष इति । पूर्वपदार्थप्रधानत्वादंशिसमासस्य " गौणो ङ्यादिः " इति न्यायोपढौकनात् " गोश्चाऽन्ते० " इति ह्रस्वत्वं स्यादतितुर्यभिक्षा इति न साधुः ।

' क्लीबे ' । २ । ४ । ९७ ॥ काण्डे कुड्ये इति-ननत्र पदं वाक्यमव्ययं चेति वचनादलिङ्गत्वे ह्रस्वत्वप्राप्तिरेव नाऽस्ति तत्कथमुक्तमिदमसादिति ? सत्यम्, पदस्यालिङ्गत्वेऽपि काण्डकुड्ययोरन्त्ययोर्यल्लिङ्गं तथदा समुदाये काण्डेकुड्ये इत्येवं रूपे उपचर्यते तदा प्राप्तिः । यद्वा काण्डेकुड्ये इत्यत्र योऽन्त्य स्थाने परेणेकारेण सह एकारः स कश्चिन्नपुंसकाकारसम्बन्धी कश्चित्पदसम्बन्धी कथ्यते-'उभयोः स्थाने' निष्पन्नत्वात् ।

' वेदूतोऽनव्ययय्वृदीच्ङीयुवः पदे ' । २ । ४ । ९८ ॥ इन्द्रहपुत्र इति-

---

१ ७-४-६८ । २ ७-४-११० । ३ ७-४-१११ । ४ २-४-३२ । ५ ७-४-११६ । ६ २-४-९६ ।

इन्द्रं ह्वयति " ओसरूपोऽपवादे० " इत्यणपवादे क्विपि " वेजादिवचेः० " इति य्वृति " दीर्घमवोऽन्त्यम् " इन्द्रहूः पुत्रः । शकहू इति–शकस्याऽपत्यानि " पुरुमगध० " इत्यण् " शौकादिभ्यो भ्रेलुप् " शकान् ह्वयति, शेषं पूर्ववत् । वृषलीभूतमिति–अवृषलं वृषलं भूतं मतान्तरेणेदं वाक्यम्, अन्यथा अत्रिलिङ्गत्वान्न प्राप्नोति । अत्रिलिङ्गान्या इति च जातिलक्षणे लिखितत्वादस्याऽत्रिलिङ्गत्वम् ।

' ङ्यापो बहुलं नाम्नि ' । २ । ४ । ९९ ॥ ङीसाहचर्यादापः प्रत्ययस्य ग्रहणं न तु क्विबन्तस्याऽऽप्नोतेरित्याह–आबन्तस्य चेति–नन्देः " पदिपठि० " इति इः । बाहुलकाद्दीर्घे नान्दी तस्या मुखम् । विष्टापुरमिति–विशं तायते क्विपि, " वेवोः व्ययूव्यञ्जनेलुक् " पृषोदरादित्वात् डरयाभावे विष्टा विष्टः पूः " ऋक्पू० " अस्समासन्तः ।

' भ्रुवोऽच्च कुंसकुट्योः ' । २ । ४ । १०१ ॥ भ्रूकुंसभ्रूकुटिशब्दावपि नारायणकण्ठी ।

' मालेषीकेष्टकस्यान्तेऽपि भारितूलचिते ' । २ । ४ । १०२ ॥ मालादिभिः प्रकृतस्य नाम्नो विशेषणात्तदन्तलाभात् केवलस्य व्यपदेशिवद्भावात् ह्रस्वसिद्धौ किमर्थमन्तग्रहणमित्याशङ्कायामाह–इदमेवेति ।

' गोण्या मेये ' । २ । ४ । १०३ ॥ विनैव तद्धितेन गोणीशब्दो गोणीप्रमितेऽर्थे व्रीह्यादावुपचाराद्वर्तते, यथा प्रस्थप्रमिते प्रस्थ इति । तस्य ह्रस्व इत्यर्थः । सत्यामपि वा तद्धितलुचि अगोणीसूच्योरिति प्रतिषेधे " गोश्चाऽन्ते० " इति च समासे ह्रस्वस्य विधानादिह ह्रस्वो नाऽस्तीति तदर्थमिदमारभ्यते ।

' ङ्यादीदूतः के ' । २ । ४ । १०४ ॥ सोमपिकेत्यादौ ह्रस्वस्य दारादिकेत्यादौ च पिति पुंवद्भावस्य सावकाशत्वात् पट्विकेत्यादौ चोभयप्राप्तौ परत्वात् पुंवद्भावे पट्विकेत्यादि न सिध्यतीत्याह–ङीग्रहणमित्यादि । ङीग्रहणमनवकाशत्वात् पुंवद्भावं बाधत इत्यर्थः । प्रत्ययाप्रत्यययोरिति न्यायाच्च भवतीति–ककतेरचि पृषोदरादित्वादत्वं, पचनं पाको घञि " केऽनिट० " इति कत्वम् । अथ कायतेः पिबतेश्च " भीण् शलिबलि० " इति, यदा कस्तदा ह्रस्वः कस्मान्न भवति ? उच्यते–उणादीनामव्युत्पन्नत्वाद्, व्युत्पत्तिपक्षे तु बहुलवचनान्न भवति ।

' न कचि ' । २ । ४ । १०५ ॥ बहुलक्ष्मीक इत्यैकत्वे " पुंवद्भावो० " बहुत्वे

१ ५-१-९६ । २ ४-१-७६ । ३ ४-१-१०३ । ४ ६-१-११६ । ५ ६-१-१२० ।
६ उणा० ६०७ । ७ ४-४-१२१ । ८ ७-३-७६ । ९ २-४-३६ । १० ४-१-१११ ।
११ उणा० २१ । १२ ७-३-१०३ ।

तु " शेषाद्वा " कप् । पूर्वसूत्रे क इति निरनुबन्धे कपि प्राप्तिरेव नाऽस्तीत्याह—न कपीति प्रतिषेध इति । नैपादकर्तृकं इति—उगवादिभ्यो यदिति इति ।

' इच्याऽपुंसोऽनित्क्याप्परे ' । २ । ४ । १०७ ॥ आपीति कृत उपश्लेषमात्रमेव । आनुपश्लिष्टे ककारे इत्वमित्यर्थस्य सिद्धेः परग्रहणं नियमार्थमित्याह—आबेव पर इति । सर्विकेति—सर्वा नाम काचित्ततः स्वार्थे " केऽण " । " इचोदीर्घः के " ह्रस्वत्वेऽस्याऽयमदिकारः । सर्वादेः सर्वशब्दस्य तु त्यादिष्वर्तादिरित्यनेनाऽऽत्यग्रहात् प्रागकि सर्विकेति न स्यात् । मातृकेति—ननु यथेहाऽऽप् नाऽस्ति तथा भिमीते इति धान्यमातुरपि मातृशब्देनाऽभिधानान्नपुंसं इत्यपि नाऽस्ति । ततो द्व्यङ्गविकलत्वान्नेदं प्रत्युदाहरणं युज्यते । प्रत्युदाहरणं हि तदङ्गाभावे कार्याभावं प्रदर्शयत्तदङ्गसामर्थ्यप्रदर्शनार्थमुपादीयते । तत्राऽङ्गद्वयवैकल्यं कस्याऽङ्गस्य वैकल्यादिह कार्याभाव इति निर्णयाभावादेकस्याऽप्यभाव इति, नैष दोषः । जननीवचनस्याऽन्यस्यैवाऽव्युत्पन्नस्य मातृशब्दस्य ग्रहणात् । यद्वा प्रत्युदाहरणदिङ्मात्रमिदं तेन स्वसृकेत्यादि प्रत्युदाहरणं द्रष्टव्यम् ।

' स्वज्ञाऽजभस्त्राऽधाऽतुत्ययकात् ' । २ । ४ । १०८ ॥ स्वा ज्ञातिः स्विकेति—यद्यपि स्वशब्दः ' स्वो ज्ञातावात्मनि क्लीबे, त्रिष्वात्मीये धनेऽस्त्रियाम् ' इति पठ्यते तथापि कुत्सितायर्थविषये ज्ञातावपि स्त्रीत्वमत एव पाठात् । भवति सुपाधिभेदाल्लिङ्गयोगस्तदन्यलिङ्गत्वं च यथा पचति रूपमित्यलिङ्गस्याऽपि नपुंसकलिङ्गत्वम् । कुटीरमिति—स्त्रीलिङ्गस्याऽपि नपुंसकलिङ्गत्वम् । विचित्रा हि शब्दशक्तयः । यद्वा ज्ञातिरत्र स्त्रीरूपा विवक्षिता तेन योनिमत्त्वामत्वात् स्वशब्दस्य स्त्रीत्वम् । न विद्यते स्वा यस्या इति कृते कपि अस्विका अस्वकेति रूपे । कचि तु अस्विका अस्वकेति रूपे । कपि निमित्तभूते विकल्पपक्षे "अस्याऽयत्०" इति न विकल्पसामर्थ्यात् । कचि तु " नेयाऽऽप " इति ह्रस्वे कृते अस्याऽयत्तद्भावत्वेन । न च सूत्रमिदम्पः प्रवर्तते । सूत्र विनाऽपि अस्विका अस्वकेति सिध्यत इति । अस्विकेति रूपमेकं रूपेणैव गतार्थमिति । स्वा आत्मा आत्मीया चेति—स्त्रीमन्नत्यत्राऽऽत्मादिरक्षितस्वस्य च योनिमता स्त्रीशरीरेणाऽभेदोपचारात् योनिमत्त्वामत्वात् स्वा इत्यत्र स्त्रीत्वम् ।

' द्व्येषसूतपुत्रवृन्दारकस्य ' । २ । ४ । १०९ ॥ यदा तु न द्वे न एषेति एषद्विशब्दौ नञ्पूर्वावित्तविग्रहं न प्रयोगयतस्तत्राऽपि कृते नञ्समासेऽनञ्समासे वाऽगिति द्वयी गतिः । उभयोरपि च पक्षयोर्विभक्तेः पर आविति । यतोऽन्तरङ्गानपि विधीन् बहिरङ्गाऽपि लुग्बाधत इति समासार्थाया विभक्तेस्तत्पदाद्यत्वात् पूर्वं लुपा

१ ७-१-१०५ । २ ७-३-१५ । ३ २-४-१०४ । ४ २-४-१०६ ।

भाव्यं, प्रत्ययलोपे प्रत्ययलक्षणं च नाऽस्ति, समुदायाद् या विभक्तिस्तामाश्रित्य त्यदाद्यत्वे सत्यापा भाव्यं, न च निग्रहकालभाविन्या विभक्त्या व्यवधीयते। तर्हि द्विके इति मूलप्रयोगेऽपि कुत्सिते द्वे इति तद्धितवृत्तौ "स्यादिसर्वादेः०" इत्यकि औकारस्य लोपे तद्धितान्तादौकारे तदाश्रये त्यदाद्यत्वे आपि च तद्धितवृत्तिनिमित्तस्य औकारस्य स्थानिवद्भावान्न प्राप्नोति ? नैवम्, उभयोरपि औकारयोरेकपदभक्तत्वेन व्यवधानं न भवति। अद्वके इत्यत्र तु समासभक्तस्य औकारस्य प्रथमेन द्विशब्दभक्तेन औकारेण व्यवधानं भवत्येव। कृत्रिमः पुत्रः–"तनुपुत्राणु०" इति के पुत्रकः स्त्रीचेत् पुत्रिका। वृन्दारिकेति–प्रशस्तं वृन्दमस्याऽस्तीति वृन्दादारकस्ततो "ङ्यान्तेरयान्त०" इति बाधायै "अजादेः" इत्यापा।

'अस्याऽयत्तत्क्षिपकादीनाम्'। २। ४। १११॥ पृथग्योगादिति–अयमर्थो यद्यत्राऽपि विकल्पः स्यात्तदा स्विका स्वकेत्यादौ "ङ्यादीदूतः के" इति ह्रस्वत्वेऽनेन वैकल्पिकस्य इत्वस्य सिद्धत्वात्, "स्वज्ञाजभस्त्रा०" इत्यादीनां पृथगुपादानमनर्थकं स्यादित्यर्थः।

'तारकावर्णकाऽष्टका ज्योतिस्तान्तवपितृदेवत्ये'। २। ४। ११३॥ णिजन्ताद्वर्ण्यत इति कर्मणि संज्ञायां णके वर्णका। वर्णयतीति तु चौरादिकप्रतिपत्त्यर्थं तिवा निर्देशो न तु णकारम्भकः। अथवा वर्णयत्याधारविशेषगतमाधेयगुणं शादयतीति।

॥ इत्याचार्यश्रीहेमचन्द्रस्मृतायामवचूर्णिकायां द्वितीयस्याऽध्यायस्य चतुर्थः पादः॥



'धातोः पूजार्थस्वतिगतार्थाधिपर्यतिक्रमार्थाऽतिवर्जः प्रादिरुपसर्गः प्राक् च'। ३। १। १॥ प्राक्छब्दस्याऽव्यवहिते वर्तनादाह–न पर इति। धात्वर्थः प्रशस्यते इति–शोभनत्वोद्भावनेन सिचि स्तौत्योरर्थस्य कर्तुः पूजा प्रतीयत इत्यर्थः। गतार्थाविधिपरीति–गतो ज्ञातोऽर्थोऽभिधेयं ययोस्तौ गतार्थौ, योऽर्थोऽनयोर्द्योत्यस्तस्य प्रकरणादिवशादवगमे निष्प्रयोजनावेवाचुच्येते इति गतार्थत्वम्। यद्येवं प्रकरणादिनोक्तत्वात्तदर्थस्य तयोः प्रयोगाऽयोगः, उच्यते–प्रकरणादेव गतार्थानामपि स्फुटतरार्थाऽवगत्यर्थः प्रयोगो लोके भवति। यथाऽमूपौ द्वौ ब्राह्मणौ द्वावनयेत्यमूपावित्यत्र द्विवचनादवगतेऽपि द्वित्वे द्विशब्दस्य प्रयोग इति। समासाभावादिति–गतिसंज्ञाया अभावात्

१ ७–३–२९। २ ७–३–२१। ३ २–४–१६। ४ २–४–१६। ५ २–४–१०४। ६ २–४–१०६।

